# किं नाम सुमनः ?

आशा, संस्कृतशिक्षिका, श्रीअरविन्दाश्रमः, पाण्डिचेरी

कुसुमं पश्यन्त्याः मम मनसि प्रश्नः जागरितः- किं नाम सुमनः ? हे प्रकृते ! अपि तव नीरवचिर-नवीनसौन्दर्यस्य मुखरः प्रतिच्छविरेषा या मामाह्लादयति ? किं नु तव प्रदीप्तकान्त्याः विमलज्योतिः एतद् यत् मां प्रसादयति । किमु अनन्ततायाः सुमधुरसुहासः एषः यः सर्वत्र दृष्टिगोचरो भवति ? बीजं सुरम्यकोरके परिणमति, मुकुलितः कोरकः स्वर्ग-समुज्ज्वलपावित्र्यं विकिरन् प्रस्फुटति यद् वयं पुष्पमिति नाम्नावगच्छामः । सुमनसः प्रत्येक-दले दृश्यते कापि परमा स्पृहा, उच्चोत्कण्ठा, सजीवा-भीप्सा, विमलपवित्रता स्वर्गीयसौन्दर्यञ्च । विकसितकुसुमं दृष्ट्वानन्दाभिभूताः विस्मयस्तिमिता भवामः वयम्––किन्तु किमर्थम् ? यतो हि प्रसूनं धरित्र्यै रूपान्तरस्य जाज्वल्यमाना प्रतिश्रुतिः । ततो ननु कुसुमं सूक्ष्मनिर्मलानन्दस्य प्रेरिका सञ्जीवनसुधा । कुसुमानामाकृतयः वर्णवैचित्र्यस्य लालित्यञ्च अस्मानाकर्षन्ति––नयनानि शीतल-यन्ति च । तानि मुखरयन्ति कामपि मूकसुवासितां भाषाम्––विभवशालिसन्देशवाहकानि खलु तानि । स्मरणातिक्रान्तकालात् मानवाभीप्सायाः चिरन्तन-स्रोतांसि तानि ।

यथाङ्कुरोऽनागतभविष्यस्य प्रतिश्रुतिः तथा पुष्पं मूर्तिमत वर्तमानस्य, तयोर्मध्ये कालस्य दीर्घव्यवधानम्––प्रथमस्तावत् मन्थरा दृष्टक्रिया-शीलतान्यच्च दृष्टिगोचरीभूतः अन्यथा निर्जीवम्म-न्यायाः मृत्तिकायाः कथं जीवनस्य गौरवमङ्कुर्यते जडम्मन्या भूमिः कथं चैतन्यप्रसविनी माता भवितुमर्हति ? बीजमात्रे नवसर्जनस्य, आगामि वसन्तस्याभासः निलीनः । विकासात्पूर्वं कुत्र निहितास्ति पुष्पस्याकृतिः, लावण्यं सुरभिश्च । मृत्तिकावक्षसि निहिते बीजे को जानाति रूपमा-पद्यमानं वर्धमानं जीवनम् ? यदा जीवनं मूर्तिमद्रूपेणाङ्कुर्यते वयं विस्मयस्तिमिताः भवामः । आपातदृष्ट्या धरित्रीमाता मलिना, निष्प्राणा, कीटकीर्णा चैतन्यहीना च प्रतीयते । निहितानि तत्त्वानि को द्रष्टुं शक्नोति ?–जीवनं, सौरभं, सौन्दर्यमाकृतिश्च–सर्वं, सर्वमेव वर्तते निर्जीवम्म-न्यभूम्याम् ।

सा एव धरणी माता या मनुष्याणां, सत्त्वाना-मुद्भिज्जगतश्च जननी–सैव स्ववात्सल्येन कुसुमानि जनयति, पोषयति लालयति च । यो वायुः अस्माकं प्राणसञ्चारी स एव पुष्पाणि हिन्दोलयति पोषयति च । समानमेव सूर्यकिरणानां नीचैः सर्वा सृष्टिः आनन्दकल्लोलं करोति ।

किन्तु यथार्थतः के स्मः 'वयम्' कानि च 'तानि'–एका खलु कृत्स्ना सृष्टिः–एकत्वं विभिन्न-तायां खण्डितं विभक्तञ्च–एकस्याः मातुः शिशवः सर्वे, समानमेव सत्त्वमस्माकं धमनीषु प्रवहति । तदा माता कथं चैतन्यहीना निर्जीवा भवितुमर्हति?

जीवनमच्छेद्यमेकत्वं ननु । अनायासं कुसुमैःसहान्त-रसख्यं लभ्यम् । जीवनयात्रायां पुष्पाणि अभिन्नमित्राणि भवितुं शक्नुवन्ति । एवं स्थिते पार्थक्यं स्वतः एव शनैः शनैः वाष्परूपेणापगच्छति यतो हि तैः सह नीरवः विनिमयः वर्तते सर्वदा । तदा विश्वसामञ्ज-स्यच्छन्दः बोधगम्यं भवति । यदि अस्माकं भावना पुष्पाणां कृते शुभेच्छया प्रेम्णा च परिप्लुता सुर-भिता च स्यात् तदास्माभिः सह तेषां भावना-विनिमयः संजायते । वृक्षाः, पुष्पाणि–अखिल-प्रकृतिः–अनन्तायाः क्रोडे, छन्दसि, सामञ्जस्ये, सौन्दर्ये जाग्रत्क्रियाशीलतायाञ्च निवसन्ति,

सजीवप्रेम्णः अनन्तभाषायां नीरवतायामस्माभिः सह संवदन्ति च। तेषां मध्ये श्वसनमपि मूल्यवदुल्लासकरं, रमणीयं चेतनाविकासकारि च। तानि अस्मान् स्वनीरवैश्वर्येण परात्परं प्रति ग्रहणशीलतां निर्दिशन्ति।

कुसुमानि स्वानन्दाय, स्वात्माभिव्यक्तये विकसन्ति। तानि विगतातीतं भविष्यञ्च न परिचिन्तयन्ति। वर्तमानस्थानि स्वात्मन्येव सन्तृप्तानि। तत एव तेषां क्षणिकजीवनमपि आनन्त्यम्। जानन्ति तानि अनन्ततायाः क्रोडे स्थित्वा कथमनन्त-सौन्दर्यसुधास्वादितव्या कथञ्च सूर्यमयूखैः अभिषिक्तैः भाव्यम्। अनन्तवासः एव तेषां स्वभावः, तेषां धर्मः। निखिलविश्वेन सह कथमानन्दसमारोहे अंशभागिभिः भवितव्यमिति सम्यक् जानन्ति तानि यतो हि विश्वप्रकृतिः तेभ्यः अभिन्ना। पुष्पं पूर्णाभिव्यक्त्या:जडतायाः रूपान्तरस्य च मूर्तिमत् प्रतीकम्।

---

## शुभ-श्रावणी-कामना

"श्रावणी नाम पर्वेदं रक्षाबन्धनसंज्ञकम्।
शुभं भूयाच्छुभं भूयात् सुहृदे भवते सदा ॥१॥
दीर्घायुष्ट्वंसुखायुष्टव मारोग्यं सुखसम्पदम्।
मनःप्रसादं भगवान् तुभ्यं देयान्निरन्तरम् ॥२॥

दिनानि रात्रयः सन्ध्याः मासाः संवत्सरास्तथा,
सुहृदो बान्धवाश्चैव स्वस्तये सन्तु ते सदा ॥३॥"

'सुस्वास्थ्यं पुरुषायुषं सफलतां विद्यां यशः प्राप्नुयाः,
सुस्निग्धाः शुभकामनाः, प्रियसुहृत्, तुभ्यं प्रयच्छाम्यहम्।

पर्वेदं शतशः प्रपश्यतु भवान् भूयाच्च सौभाग्यवान्,
मैत्री वृद्धिमवाप्नुयाच्च परमामेषा सदैवावयोः ॥४॥"

भावत्कः—जनमेजयः विद्यालंकार

# वेदानाम् शाखाः (८)

प्रा. भद्रसेन, साधु आश्रम, होशियारपुर

अनेकशास्त्राणामध्ययनेनावगम्यते, यद् वेदानां ११३१ शाखाः सन्ति । यथा महाभाष्ये समायाति-एकविंशतिधा बह्वृच्यम्, एकशतमध्वर्युः, सहस्रवर्त्मा सामवेदः,नवधाऽथर्वणो वेदः । एवैव चर्चा महाभारत-पुराण-हृदय-प्रपञ्च-चरणव्यूह-दिव्यावदानादिग्रन्थेषु प्राप्यते । शाखाकाराणामृषीणाम् सामान्यपरिचयो महाभारत–निरुक्त–बृहद्देवता–पुराण–हृदयप्रपञ्च-प्रभृतिभिर्ग्रन्थैर्ज्ञायते ।

क्वचित् शाखाशब्दो वेदशब्देनापिव्यवहृतः । यथा–आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतो मुखाः महा. शा. ३६६ । आम्नायमार्षं पश्यामि यस्मिन् वेदाः प्रतिष्ठिताः महा. शा. २७४ । आम्नायं = चरणम् यतो हि आर्षविशेषणम्, तेभ्यो वदीय-शाखानां प्रसवः । परमद्यत्वे शाखाचरणशब्दौ केषुचिद् ग्रन्थेषु समानार्थवाचकौ प्रयुज्येते । शाखा चरणस्यावान्तरविभागो यथा-अनुशाखा, अनुब्राह्मणम् । शाकल-बाष्कल, वाजसनेय-चरक इत्यादीनि चरणानि, एषां पुनः क्रमशः ५, ४, १५, १२ भेदाः सन्ति–भगवद्दत्तः ।

शाखाशब्देन विविधो भावो गृह्यते । अत्र चत्वारः पक्षाः । केचन मध्यकालीनपरम्पराया विद्वांसः स्वीकुर्वन्ति, यत् शाखाः संहितावत् मूलवेदा एव, तासां पृथक्स्वतन्त्रसत्ताः अपौरुषेयाश्च ताः । अतस्तासां स्वानुयायिषु मूलवेदवत् प्रामाण्यं प्रचलति ।

केचन ! आधुनिकाः ।– स्वतन्त्रसत्तावन्त्यः पाठभेदमय्यो मूलवेदरूपिण्यः एव शाखाः । एकस्या एव स्वमूलसंहिताया भौगोलिकपरिस्थितिवशादु-त्पन्नानां पाठभेदानां संस्करणि । अर्थाद् विभिन्न-पठपरम्पराणां प्राचीननाम शाखेति ।

अत्र शाखाशब्दस्य वृक्षशाखाशब्दाद् भिप्रायोऽ-र्थश्च यतो हि वृक्षे शाखातो भिन्नः शाखिन् (अवयवी) भवति । शाखाच्छिन्ने स तिष्ठति । परन्नात्र शाखाया भिन्नः शाखिन्, यत्तन्नष्टे चादशिष्यते । यथा शाकलाद् भिन्नो नान्यः ऋग्वेदः, स एव ऋग्वेदः ।

वैदिककुलेषु पृथक् पृथक्रूपेण स्वतन्त्रतया स्वशाखाया एव मान्यता, नान्यासां प्रामाण्यम् । शाकलः शाकलेष्वेव बाष्कलो बाष्कलेष्वेवनान्यत्र । परमत्रैका शंका जायते, यत् शाखाविवरणकाले चतुर्णामेव भेदाः कथमुच्यन्ते । पुनः कथं सर्वासां स्वतन्त्रसत्ता । साहित्ये च । मनु–शत–मुण्डकादिषु स्वतन्त्ररूपेण ऋग्वेद, यजुर्वेद, सामवेद इत्यादीनि वेदनामानि शाखानामरहितान्येव, प्राप्नुवन्ति तर्हि कथं शाकल एव ऋग्वेदो नान्यः कश्चित् ।

तृतीयपक्षः–

शाखाः ऋग्वेदादिभ्यो भिन्नास्तदवयवरूपाः, काश्चन शाखाः संयुज्य चरणनाम्ना अभिधीयन्ते, यथा शाकल–बाष्कल–माध्यन्दिन–तैत्तिरीय इति । कानिचित् चरणानि संयुज्य वेदत्वेन व्यवह्रियन्ते अतः शाखा वेदावयवाः, यतो हि तासां वेदात् पृथक्स्थितिः, न तु शाखा एव वेदः ।

क–ऋग्यजुः सामाथर्वणश्च चत्वारो वेदाः, सांगाः सशाखाश्च चत्वारः पादा भवन्ति । नृसिंह पुराण ।

ख–ये तद् बृहज्जाबालं नित्यमधीते, स ऋचो-

ऽधीते, स यजूंषि–अधीते, स सामान्यधीते, सोऽथर्व-णमधीते, सोऽङ्गिरसमधीते । स शाखामधीते, सकल्पानधीते–बृहज्जाबालोपनिषत् ।

चतुर्थपक्षः–सर्वाःशाखा वेदव्याख्यानानि सन्ति

क–सर्वास्ता हि चतुष्पदा, सर्वाश्चैकार्थवाचिकाः ।
पाठान्तरे पृथग् भूता वेदशाखा यथा तथा ।।
वायु पुराण ६१, ५६ ।।

ख–प्राजापत्या श्रुतिर्नित्या, तद् विकल्पाश्च इमे स्मृताः ।। वा.पु.६१, ७५ ।।

ग–तेन प्रोक्तम् पा.४, ३, १०१ सूत्रभाष्यें–न हि छन्दांसि क्रियन्ते, नित्यानि छन्दांसि । यद्यप्यर्थो नित्यो या तु–असौ वर्णानुपूर्वी सा अनित्या । तद् भेदाच्चैतद् भवति काठकं, कालापकम्, मौदकम्, पैप्पलादकम् । अत्र पतञ्जलिः पाठभेदादेव शाखाभेदं स्वीकरोति, पाठभेदश्च व्याख्यानार्थम् । तेन व्याख्यातम् तत् अध्यापितं वा प्रोक्तमिति उच्यते ।

घ–उपलब्धानां शाखानां तुलनात्मकाध्ययनेन इत्येव सिध्यति, यदिमाः शाखा वेद व्याख्यानरूपाः । तत्र बहुत्र वेदीयशब्दानामर्थो निर्दिष्टः ।

आमस्मिन् पक्षे शङ्केयं जायते, यदि शाखा वेदानां व्याख्यानरूपाणि तर्हि आसु कश्चन नूतनो मन्त्रः कथं वर्तते । तथा वैदिकसाहित्ये । ब्राह्मणा-रण्यकादिषु । प्रतीकनियमो वर्तते, यत् स्वशाखाया उद्धरणप्रतीकत्वेन प्रदीयते, अन्यासां पूर्णो मन्त्रः प्रदीयते । "इमे चित्रे राष्ट्री–" ऐतरेये ब्राह्मणे प्रतीकत्वेन वर्तते । परम् मन्त्रोऽयम् अथर्ववेदे ४, १२ प्राप्यते । इन्द्रात् छन्दः प्रथमं–अयं मन्त्रः केवलं वाक्यपदीयस्य आगमकाण्डे प्राप्यते, नान्यत्र । ऋक्लुप्तशाखायाः स्यात् ?

---

## मकरसंक्रान्ति-शुभ-कामना

संक्रान्तिर्मकराभिधा भवतु ते धन्या मनोहारिणी, सुस्निग्धाः शुभकामनाः, प्रिय सुहृत्, तुभ्यं प्रयच्छाम्यहम् ।
पर्वेदं शतशः प्रपश्यतु भवान्, भूयाच्च सौभाग्यवान्, मैत्रीवृद्धिमवाप्नुयाच्च परमामेषा सदैवावयोः ।।

सुस्वास्थ्यं पुरुषायुषं सफलतां विद्यां यशः प्राप्नुयाः, कान्तिं चन्द्रमसो लभस्व, लभतां सूर्यस्य तेजो भवान् ।
विश्वेशस्त्वयि तुष्यतु प्रतिदिनं, भूयाद् दयालुस्त्वयि, देयात् ते च, वयोऽधिकं, गजबलं, शार्दूलविक्रीडितम् ।।

भावत्क––जनमेजयः विद्यालंकारः

## दिवंगतस्य मान्यस्य डा० अविनाशचन्द्रवसोः

# पुण्यस्मरणम्

विनयावनतो धर्मदेवः (विद्यामार्तण्डः) देवमुनिर्वानप्रस्थः आनन्द, कुटीरम् ज्वालापुरम्

आसीद् यदीयं हृदयं पवित्रं, तथा चरित्रं व्यसनैर्विमुक्तम् ।
देवेशभक्तं विषयेष्वसक्तं, नौम्याप्तबन्धुमविनाशचन्द्रम् ॥
वेदेषु भक्तिः परमा यदीया, तेषां प्रसारे निरतोत्वजस्त्रम् ।
ग्रन्थान्लिलेखातिमनोरमान् यः,नौम्याप्तबन्धुं ह्यविनाशचन्द्रम ॥

यस्य स्वभावः सरलः सुशान्तो यस्मिन्न कोपो न मदो न लोभः ।
प्रेम्णा समस्तैः सह वर्तमानं, स्तौम्याप्तबन्धुं ह्यविनाशचन्द्रम् ॥
न वेदशास्त्राध्ययनादृते मे, साफल्यमत्राप्स्यति जीवितं सत् ।
विचार्य वेदाध्ययने प्रवृत्तं, नमामि मान्यं ह्यविनाशचन्द्रम् ॥

अचिन्तयद्यो ह्यविनाशितत्वम्, आह्लादकारी च बभूव चन्द्रवत् ।
ज्ञानान्वितं निर्मलभक्तियोगिनं, नमामि मित्रं ह्यविनाशचन्द्रम् ॥
प्रयाणकाले मनसा च तेन, देवं स्मरन्तं ध्रुवशान्तिमूलम् ।
प्राणाँस्त्यजन्तं शुभयोगितुल्यं, नमामि मान्यं ह्यविनाशचन्द्रम् ॥

पुण्यात्मनः संस्मरणं समेषु, भक्तिं सुशान्तिं जनयेत् सदैव ।
सर्वे च वेदाध्ययने प्रवृत्ताः, देवेशभक्तौ निरतास्तथा स्युः ॥

# साहित्यं तत्, यद्बहुजन हिताय"

( डा० मञ्जुलमयङ्क पन्तुलः, वेदव्याकरणाध्यापकः, विश्व भारती, शान्ति निकेतनम् )

परिवेशपरिवर्त्तनात् वैचारिकी आस्था जागर्त्ति । कदाचित् परिवर्त्तते । मानव-चेतःसु जायमानमनुभूतिजन्यं तदेव परिवर्त्तनं साहित्ये प्रकाश्यते । अनुभूतीनां भिन्नत्वेऽपि स्वान्तः सुखाय वादिभिः आत्मानुभूतिरेव केवलं साहित्य-सात्कृता । एवं सति अभिव्याहाररूपायाः वाचोऽव-लम्बनात् "साहित्यं सापेक्षम्" इति तेषामेवाचार-व्यवहारप्रक्रियया जनानुरोधि साहित्यमित्यस्माक-मेव मतं पर्यायेण अनुमोद्यते । अद्यत्वे जीवनायामेषु महतः परिवर्त्तनात्, रूढ्या समायातायाः साहित्यक-मान्यतायाः स्वभावतो निरासः समापतितः संस्कृतसाहित्यस्य यावत्कृति प्रमाणं यदस्याः भाषायाः समुपलभ्यमानं साहित्यं संप्रदायानुमते एव वर्णने प्रवणम्, यत्र राजानो नायिकाश्च प्राथम्ये भेजिरे ।

संस्कृतसाहित्यस्येदृशं समष्टिचिन्तारहितं लोकानुरागवैरस्यं मुष्टिमितान् कांश्चित् संस्कार कर्दमितान् एव जनान् तोषयितुं प्रभवेत् । विचारो-पक्रमोऽप्यत्र तावद्युज्यते यद्राजाश्रये पल्लवितं साहित्यं जनतन्त्रेऽपि कथम् उपयुक्तम् ? यतो हि रूढे साहित्ये क्वाचित्कैनैवोपलभ्यमानस्य लोका-नुरागशब्दस्य यावद्भिः प्रयोगैः जगत्प्रवृत्तिरेव केवलं वारिता दृश्यते । एतादृशे च साहित्ये जगत्प्रवृत्तिव्यावर्त्तिकी प्रेरणारूपा या प्रवर्त्तना सैव तत्र लोकानुरागः । किन्तु जगत्प्रवृत्तेरसत्तया विरचितमखिलमपि साहित्यं लौकिकमसत् विरच्यमानात् विरचितात् वा साहित्याभिध-विशेषणात् अतिरिच्यते ! तल्लोकजीवनस्य वास्तवे चित्रणे अनुरक्तानां लोकानुरागरसिकानां मते लोकजीवनविमुखं साहित्यं लोकानुपयोगितया केवलं साहित्याभिधमेव ।

उपरिष्टात् कीर्त्तितस्य संप्रदायानुमोदितवर्ण-नस्य अवास्तवमेकेनातिलघुनोदाहरणेन स्पष्टयितुं क्रमामहे । संस्कृतसाहित्यसंप्रदाये योषितामास्यमद्यैः बकुलविकासस्य मनोहारिणी मान्यता सर्वेषां सुविदिता । किन्तु सत्योन्मेषधिया अस्मत्साहित्यिकाः वदेयुः किमस्यामुक्तौ दृश्यते काचन व्यावहारिकता? धर्मप्राणानाँ संस्कृतोपासकानां मध्ये तथा आस्थापि न दृश्यते । तथापि साहित्यनाम्नि योषितामास्य-मद्यमद्यावधि तदेव स्थानं लभमानमास्ते । मन्ये ईदृश्या परोक्षमद्योपासनया अस्मत्साहित्यिकाः तथा मदोन्मत्ताः जाताः यथा वास्तविकी साहित्य धीर्विलुप्ता । लोकसुखदुखानुभूतिशून्यमपि संस्कृत-साहित्यं सर्ववरीयः, अन्यदीयानि रुचिराण्यपि साहित्यानि हेयानीत्यपलाप एव ।

किन्तु बभूवुः केचन स्वनामधन्याः कविपुङ्गवाः यैः सत्यं शिवीकृत्य संस्कृत साहित्यमुदात्तीकृतम् । तैश्च, अतीतानागतवर्त्तमानप्रसरधिया त्रिष्वपि कालेषु वित्तगतमाभिजात्यं लक्षितम् । भारतमपि अस्याः सार्वभौमरूढेः न कदापि अपवादो बभूव । विद्याभूषिता अपि वित्तहीनाः विद्वांसः अतीते तथैव समादरं न लेभिरे यथा वर्त्मनि । अस्य सत्यस्य धार्ष्ट्यम्, वाग्विलासिनः वाचि सगर्जनमु-न्मुक्तगिरावातरत् :—

"सर्वे गुणाः काञ्चनमाश्रयन्ति ।"

न चेयमुक्तिः अर्थप्रशंसापरा अपितु विद्या-वित्तयोः अक्रमे व्यतिहारे कवेरसहायो निःश्वासः ।

इतोऽपि मार्मिकी लोकानुभूतिः शिशौ शवोपलब्धिः,१ या च अस्य देशस्य उग्रतममार्थिकवैषम्यमाविष्करोति। रिक्ताःभारतभक्ताश्च किमस्मानवबोधयितुं क्षमाः यत्कैः दोषैः अस्य सरस्वतीभक्तस्य शिशवः शवा इव अजायन्त ? अन्येन तु वस्त्राभावे पिता महाद्यौरुपभुक्तयौवनः पितुरंगभूषणं पटः२ पुष्पवतेव धार्यते। काचन गृहिणी पथि गच्छतो लाजाविक्रेतुः मुखात् "लाजा" इति शब्दं श्रुत्वा झटिति शिशोः कर्णौ अपि दधाति३। सत्यं, क्रय शक्तिहीनायाः मातुरेष एव सुलभः पन्थाः।

वृत्तिरहितोऽपरः कश्चित् वृत्तिसन्धाने गतोऽपि अनासादितवृत्तिः (यथा युवानः अद्यापि न लभन्ते) नैराश्यवृतः गृहासन्नो यदा गृहिण्याः "पितरि आगते वस्त्रालंकारदानाश्वासनं" श्रुतं तदा निःश्वस्य गृहमप्रविश्यैव पुनस्तदैव सास्रं प्रस्थितवान्४।

दारिद्र्योपहतयोः कयोश्चित् दम्पत्योः दुर्दशया द्रवितः चोरोऽपि अश्रूणि विमुञ्चति५।

पृथिव्या अन्यतरस्मिन्नपि भूखण्डे मुसलीव मूषक, मूषीव मार्जारिका, मार्जारीव शुनी अन्वेषणादपि न लप्स्यते कच्चित्। किन्तु दारिद्र्योपहतस्य गृहे विचित्रेयं जन्तुशाला६ अनायासं लब्धुं शक्यते। सर्वतो विचित्रो जन्तुः गेहिनः सा गृहिणी या गृहमुच्यते, दैन्यजर्जरिता सती शुनीत्वमाप्नोति। गेहिनो वृष्टिजन्या दुर्दशा तु असामाजिकमपि जनं द्रावयेत्७। एतादृशीषु रचनासु, भारतीयं जनदैन्यं भूतवर्त्तमानयोः समानमेव लक्ष्यते। तथापि संस्कृतसाहित्यिकैः अव्यावहारिकी तिरस्कृता च कल्पना चिरात् मूर्त्तिमती क्रियते। अतएव संस्कृतसाहित्यस्य समुन्नतिघोषस्तावत्सार्थकतान्नावहति, यावल्लोकानुरागप्रेरितं वास्तवं सुखदुःखजन्यं भावविह्वलत्वमत्र समष्ट्यै न प्रकाश्यते।

---

१. क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवाः, लिप्ता जर्जरकर्करी जतुलवैर्नो मां तथा बाधते। गोहिन्या त्रुटितांशुकं घटयितुं कृत्वा स काकुस्मितं, कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता।

२. अयं पटो मे पितुरंगभूषणं पितामहाद्यौरुपभुक्तयौवनः। अलंकरिष्यत्यथ पुत्रपौत्रकान् मयाऽधुना पुष्पवतेव धार्यते॥

३. अये ! लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी, शिशोः कर्णौ यत्नात्सुपिहितवती दीनवदना

४. मा रोदीश्चिरमेहि वस्त्ररहितान् दृष्ट्वाद्य बालानायातस्तव वत्स दास्यति पिता ग्रैवेयकं वाससी। श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य निष्कंचनो निःश्वस्याश्रुजलप्लवप्लुतमुखः पान्थः पुनः प्रस्थितः॥

५. कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकम्, रिक्तं भूतलमत्र नाथ ! भवतः पृष्ठे पलालोच्चयः। दम्पत्योरिति जल्पतोर्निशि यदा चोरः प्रविष्टस्तदा, लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः॥

६. मद्गेहे मुसलीव मूषकवधूर्मूषीव मार्जारिका, मार्जारीव शुनी शुनीव गृहिणी वाच्यः कमन्यो जनः। इत्यापन्नशिशूनसून्विजहतो दृष्ट्वा तु झिल्लीरवैर्लूना तन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति।

७. पीठाः कच्छपवत्तरन्ति सलिले संमार्जनी मीनवत्, दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून्। शूर्पाधिवर्तिमस्तका च गृहिणी, भित्तिः प्रपातोन्मुखी, रात्रौ पूर्णतडागसन्निभमभूद्राजन्मदीयं गृहम्॥

# महाकविश्रीभारविगौरवम्

डा० अमरनाथपाण्डेयः, संस्कृतविभागाध्यक्षः, काशीविद्यापीठम्, वाराणसी

वन्दे किरातं निगमान्तवेद्यं वन्दे कविं तस्य च काव्यसिद्ध्यै ।
आनन्दसन्दोहमनल्पबोधं ददाति चित्ते स्फुरितं मदीये ।।
शैली नवा कापि समर्चिता यैर्लोकप्रसङ्गो ग्रथितो नवीनः ।
स्रष्टुर्विधानं विवृतं समृद्धं ते पूजनीया विबुधैः कवीशाः ।।
शब्दार्थसम्बन्धमलं सृजद्भिश्शब्देन भावानधिकान् किरद्भिः ।
चित्रं लिखद्भिः सकलं च सद्भिः काचित् सुधार्द्रा कथिता कथालिः।
वनस्थली कर्षति कान्तिभिर्यं हरन्ति वृक्षा लतिकाः खगाश्च ।
प्रीणन्ति शैला यमुदात्तशृङ्गैः सोऽयं कविर्भारविरध्वगाग्रः ।।
दिव्येऽवदाते महिते प्रसङ्गे पात्रे सदा यस्य मनोऽनुरक्तम् ।
आनर्च वृत्तैर्नितरां पवित्रैः शिवं विभाव्योऽविरतं कृती सः ।।
यस्य प्रभावं नहि गातुमीशा अस्या धरित्र्या मुनयः कवीशाः ।
तस्य क्रियाकौतुकमुल्लिखन्तं नैसर्गिकं भारविमानतोऽस्मि ।।
शृङ्गारलासं चरितप्रकाशं सौन्दर्यभासं कवितालिरासम् ।
अलङ्कृतीनां च नवैर्विधैर्निर्जग्रन्थ काव्यं नयपूतपृष्ठम् ।।
क्लिष्टं च काव्यं निरसं प्रणीतं न रोचते तद्रसिकाय सम्यक् ।
वैरस्यमापादयति प्रतीते चित्ते कवौ दोषफलं गिरामः ।।
क्वचित् पुराणं प्रकृतिप्रबन्धं काव्ये स्वकीये प्रततान मिथ्या ।
नवार्थराहित्यगतच्छवौ किं रज्यन्ति चेतांसि समाहितानाम् ।।
पूर्वं यमर्थं रुचिरं जगाहे पुनस्तमर्थं प्रतिपादयन् सः ।
दोषं समालिङ्गति नूनमस्मान् निभालयन्तु प्रतिभापरीताः ।।
काव्येऽनपेक्षितं बध्नन् विस्तरं विहितं क्वचित् ।
वैदुषीख्यापने सक्तो मार्गं नानुससार सः ।।

किरातार्जुनयोर्युद्धं नौचित्येन बबन्ध सः ।
शिवेन त्वर्जुनस्येदं नातिशय्यमपेक्षते ।।
सदर्थाः स्वीकृताः सत्यं गुरुत्वं तत्र पूजितम् ।
क्वचिच्छ्लोके सदाराध्ये जगुः सन्दर्भराशयः ।।
जीवनस्य च सङ्कल्पा विशुद्धा देशना तथा ।
विभिन्ना वृत्तयो नृणामजस्रं सन्निरूपिताः ।।
राजनीतेस्तु वैशिष्ट्यं सोल्लासं कविना हितम् ।
तत्र नैकप्रतानानां विकल्पा रचितास्तथा ।।

श्लोकैश्श्लिष्टैश्च चित्रैश्च दुनोति रसिकान् भृशम् ।
कृत्रिमैर्वचनैर्बद्धं काव्यं फल्ग्वभिधीयते ।।

# वैदिक-साहित्य-सौदामिनी

श्री वागीश्वरो विद्यालंकारः साहित्याचार्यः

यथा वा--

**अनेजदेकं मनसो जवीयो नैनद् देवा,**
**आप्नुवन् पूर्वमर्षत् ।**
**तद् धावतोऽन्यानत्येति तिष्ठत्,**
**तस्मिन्नपो मातरिश्वा दधाति ।।**

**यजु० अ० ४०,म० ४।**

मन्त्रेऽस्मिन् परमात्मतत्त्वं निरूप्यते । एकम् अद्वितीयम् स्वसदृशद्वितीयरहितम् केवलमित्यर्थः । 'एक संख्यान्तरे श्रेष्ठे केवलेतरयोरपि ।' इति-मेदिनी । अनेजत् अचलम् । एजृगतौ कंपने चेति धातोः शतरिरूपम् । मनो हि जवनं ततु ततोऽपि जवनतरम् इति जवीयः । जवशब्दादियसुनि साधु। देवामनश्चक्षुःप्रभृतयः, पूर्वं प्रागेव अर्षत्-गतं तत् न आप्नुवन् प्राप्तुं ज्ञातुं न शक्नुवन्ति । अतिसूक्ष्मत्वात्तस्य । तिष्ठदपि तद् अन्यान् मनःप्रभृतीन् देवान् धावतोऽपि अत्येति अतिक्रम्य गच्छति । प्रलयानन्तरं निरुपाधिकं ब्रह्मरूपम् अपहाय जगत्-सिसृक्षया सगुणत्वमापन्ने सति तस्मिन् जायमानेषु च जीवेषु मातरिश्वा प्राणवायुः जीवेषु अपः कर्म-शक्ति दधाति । अथवा पूर्वकल्पकृतमदृष्टरूपेण अव-स्थितं जीवानां शुभाशुभकर्मजातं सक्रियं करोति ।

यदेव अनेजत् तदेव जवीय इति परस्पर-विरुद्धयोर्गुणयोर्धर्मयोर्वा ऐकाधिकरण्याऽसंभवाद् विरोधः । धावनक्रियाऽभावेऽपि धावतोऽन्यान् अत्येतीति कथनाद् हेतुं विनाऽपि कार्योत्पत्तिरूपा विभावना । जववत्सु सर्वेषु तस्य जविष्ठत्वाद् व्यतिरेकः । एभिः स्वतः संभविभिरलङ्कारैर्भगवतो महिमातिशयरूपं वस्तु व्यज्यते । ननु "अनेजदेकं मनसो जवीयः" इत्यत्रापि "अमितः समितः प्राप्तै" रित्यत्रेव कुतो न विरोधाऽऽभासध्वनिः, विरोध-सूचकानाम् अपि प्रभृतिपदानामप्रयोगादिति चेत्, अङ्ग उभयथाऽपि लक्ष्येऽलङ्काराद्वस्तु ध्वनि-त्वमक्षतम् । अलङ्कारस्य ( विरोधस्य ) व्यङ्ग्य-तायामपि तस्य तत्राऽनपायात् (विरोधताऽन-पायात्) ।

अपि च--

**निर्वै क्षत्रं नयति, हन्ति वर्चो,**
**ऽग्निरिवाऽऽरब्धोविदुनोति सर्वम् ।**
**यो ब्राह्मणं मन्यते अन्नमेव,**
**स विषस्य पिबति तैमातस्य ।।**

**अथर्व० ५।१८।४।**

अत्याचरितस्तपस्वी ब्राह्मणः क्षत्रम् अपका-रिणं शासकम् निर्णयति निःशेषतां नयति । अस्य पुत्रपौत्रराज्यादिकं विदुनोति उपतापयति भस्मसा-त्करोति । अस्य वर्चो हन्ति । आरब्धोऽग्निरिव अत्याचारिणः शासकस्य सर्वमेव नाशयतीत्याशयः । यो हि ब्राह्मणं ब्रह्मविदं तपस्विनं तस्य धनादिकं वा अन्नमेव स्वोपभोग्यमेव मन्यते स तैमातस्य विषस्य पिबति स सर्पविषमेव पिबति । कर्मणि षष्ठी । इह ब्राह्मणस्य अन्नेन अभेदाध्यवसानाद् अति-शयोक्तिः । सा च-ब्राह्मणसर्वस्वहरणं सर्पविष-पानमिवेति बिम्बप्रतिबिम्बभावाऽवबोधनरूपाम् निदर्शनामुत्थापयति । संभवन् वस्तुसंबन्धोऽस-म्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ।। (साहित्यद० १० कारि.) साम्ये हि प्रणिधानगम्ये सप्रयत्नचिन्तनवेद्ये सति बिम्बप्रतिबिम्बभावः । अत्र निदर्शनाऽलङ्कारेण अत्याचारिणः शासकस्याऽवसानं घोरयातनाभि-

पृथग्भावं पश्यति। अत्र सूर्येन्दू एव विलोचने यस्येति द्यावापृथिवीरूपम् अद्भुतं मण्डलद्वयमेव चक्रवाकयुगलमिति च रूपक्। तथापि कविप्रौढोक्तिसिद्धं पौराणिककल्पनाप्रसूतं वा सूर्यचन्द्रयो र्भगवतो नेत्ररूपेण वर्णनात्मकं वस्तुमुख्यं चमत्कारकारणम्। तेन च पर्यायेण गच्छतोरागच्छतोश्च रात्रिदिवसरूपयोर्वस्तुनो र्व्यञ्जनाद् वस्तुध्वनिः।

तथा--

**सुविज्ञानं चिकितुषे जनाय सच्चा-**
**ऽसच्च वचसी पस्पृधाते।**
**तयोर्यत् सत्यं यतरद् ऋजीय-**
**स्तदित् सोमोऽवति हन्त्यासत्॥**

**ऋ० ७।१०४।१२।**

देवता-इन्द्रः। ऋषिः-मैत्रावरुणिर्वसिष्ठः। सुविज्ञानं चिकितुषे-सम्यग् ज्ञानं जिज्ञासमानाय जनाय। जनमनुकूलयितुमित्यर्थः सद् असच्च वचसी तथ्यमिथ्यावचने पस्पृधाते तस्य बुद्धौ संघर्षमिव समाचरतः। अयं जिज्ञासुर्मामिव सत्यत्वेन स्वीकरोत्विति प्रयतेते। तयोर्मध्येयत् सत्यं यथार्थं तदित् तदेव सोमोऽवति सद्वृत्तिर्जनो गृह्णाति। किं लक्षणं सत्यस्य? ऋजुत्वमेव। यतरत् ऋजीयः सरलतरं तदेव सत्यम्। द्वयोर्बिन्द्वोर्मध्ये सरला रेखा एकैव कुटिलास्तु बह्व्यः। अथवा सोमः उमया सह वर्तमानः। उमा१ यथार्थज्ञानम्। लोके हि द्विविधाः पुरुषाः दृश्यन्ते। एके येषां सत्यं प्रति स्वाभाविकी प्रवृत्तिः। अपरे च निसर्गेण असत्योन्मुखाः। सत्यं जानन्तोऽपि ते प्रकृतिवशंवदा असत्यं स्वीकुर्वन्ति च्यवन्ते च श्रेयसः। सत्याऽसत्ययोर्वचसोश्चेतनमानवयोरिव संघर्षो न संभवति, तेन मुख्यार्थबाधेऽपि तद्वर्णनं कविप्रौढोक्तिमात्र सिद्धं वस्तु। तेन चान्ते सत्यं त एव कल्याणं भवतीति वस्तु व्यज्यते।

अथाऽर्थशक्त्युद्भवध्वनेः **षष्ठोभेदः** कवि प्रौढोक्तिसिद्धाद् वस्तुनोऽलङ्कारध्वनिस्वरूपः—

यथा--

**रजनीषु विमलभानोः करजालेन प्रकाशितं वीर धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम्॥** **साहित्यद०, परि० ४,**

अत्र कविप्रौढोक्तिमात्रसिद्धेन कीर्तिसंतत्या भुवनमण्डलधवलीकरणरूपेण वस्तुना तस्याश्चन्द्रकरजालाद् उत्कर्षव्यञ्जनाद् व्यतिरेकालङ्कारस्यध्वनिः।

यथा वा--

**किं पुण्यमाचरितमेभिरहो महीयः**
**स्वप्राग्भवेषु कृतिभिर्नु महानुभावैः।**
**आचामतीह गुरुसूनु हकीकतादीर्य-**
**च्छीतलोज्ज्वलयशोऽमलचित्तमेषाम्॥१६॥**

( इदं पद्यं मदीयम् )

धर्मरक्षार्थं स्वजीवनं समर्पितवतां जनानां सुचरितश्रवणव्यसनिभिर्महानुभावैः स्वपूर्वजन्मसु किं नाम पुण्यमाचरितं यत् फलभूतमेषां चित्तैरिह जन्मनि सुगृहीतनामधेयानां श्री गुरुगोविन्दसिंहतनयद्वयबालकहकीकतरायप्रभृतीनां शीतलं धवलं च यशः कर्णेहत्य निपीयते? इह यशसः शीतलत्वं धवलत्वं च कवि प्रौढोक्तिमात्रसिद्धम्, तेन **च** श्रोतॄणां चेतसश्चकोरत्वव्यञ्जनादुपमाया रूपकस्य वालङ्कारस्य ध्वनिः। वेदेऽपि--

**वि मे कर्णा पतयतो विचक्षु,**
**र्वीदं ज्योतिर्हृदय आहितं यत्।**
**वि मे मनश्चरति दूर आधीः,**
**किस्विद् वक्ष्यामि, किमु नू मनिष्ये॥**

**ऋ० ६।९।६**

---

१. विद्या उमारूपिणी प्रादुरभूत् स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतया विद्या। इति केनोपनिषद्भाष्ये श्रीशंकराचार्याः।

देवता–वैश्वानरोऽग्निः । ऋषिः-बार्हस्पत्योभरद्वाजः । छन्दः-त्रिष्टुप् ।
हे वैश्वानरदेव तव महिमानम् आकर्णयितुं मम कर्णा-कर्णौ विपतयतः विविधादिशो धावतः । तव महिमानं दिदृक्षमाणस्य मम चक्षु विपतयति विविधान् पदार्थान् प्रति धावति । हृदये आहितं स्थापितम् यदिदं बुद्धिरूपं ज्योतिस्तदपि विपतयति, कीदृक् तव स्वरूपमिति निरूपयितुं विविधं चेष्टते । दूरे आधीः सुदूरवर्तिषु अतीन्द्रियेष्वपि पदार्थेषु आधानं यस्य, तन्मदीयमिदं मनोऽपि विचरति विरुद्धासु दिक्षु संचारमाचरति । एवं बुद्धिमनःसहितेषु सर्वेन्द्रियेषु प्रयतमानेष्वपि तव याथार्थ्यमहं नावगच्छामि । इति सति हेतौफलाऽभावरूपा विशेषोक्तिः । एवं विमूढमतिरहं किं स्विद् वक्ष्यामि ? दूरे तावद् वचनम् किं मनिष्ये किं चिन्तयेयम् इत्येव न निश्चिनोमि । कर्णचक्षुरादीनां चेतनवत् स्वत इतस्ततो धावनमनुपपन्नं कविप्रौढोक्तिमात्रसिद्धं वस्तु । तेन च सति हेतौ फलाऽभावरूपाया विशेषोक्तेर्व्यञ्जनाद् इह वस्तुनोऽलंकारध्वनिः । चुरादिगणस्थः पतगतौ धातुः 'वाणिजन्नः ।' इति गणसूत्रेण विकल्पात् पातयति पतयतीतिचेति रूपद्वयम् । मन्त्रे विषयं बुद्धिं निगीर्य तस्य विषयिणा ज्योतिषाऽभेदाऽध्यवसानादतिशयोक्तिः । सूर्यचन्द्रादिबाह्यज्योतिषां निरासाय उक्तं हृदय आहितमिति ।

अथ अर्थशक्त्युद्भवध्वनेः **सप्तमो** भेदः कविप्रौढोक्तिसिद्धादलङ्काराद् वस्तुध्वनिरूपः––

यथा––

**दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।**
**मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ।।**

**रघु०, स० १०, प०**

अत्र कविप्रौढोक्तिसिद्धेन अयोध्यायां श्रीराम जन्मक्षणे लङ्कायां रावणमुकुटस्य न मणयः प्रत्युत तद्व्याजेन राक्षसश्रियोऽश्रुबिन्दवः पृथिव्यां पतिताः) इत्यपह्नुत्यलङ्कारेण भविष्यद् राक्षसलक्ष्मीविनाशरूपं वस्तु व्यज्यते । साहित्य०, परि०४, अमूर्तया राक्षसश्रियोऽश्रुपतनाऽसंभवात् तद्वर्णनं कविप्रौढोक्तिमात्रसिद्धम् । लोके देवतानामश्रुपातादिकममङ्गलसूचकं मन्यते ।

तथा––

**एकाऽऽनने सुचतुरस्य विलोक्य यस्य**
**साङ्गान् मुखं निवसतश्चतुरोऽपि वेदान् ।**
**गर्वं व्यमुञ्चदचिराच्चतुराननः स**
**तानुद्वहन् कथमपि स्वमुखैश्चतुर्भिः।।२०।।**

चतुर्भिर्मुखैरेकैकशश्चतुरो वेदान्, कथमपि न तु सुखेनेत्यर्थः, वहन् ब्रह्मा महर्षेर्दयानन्दस्य एकस्मिन्मुखे साङ्गान् चतुरो वेदान् सुखपूर्वकं निवसतः पश्यन् पाण्डित्यगर्वं व्यमुञ्चदिति कविप्रौढोक्तिमात्रसिद्धेन व्यतिरेकालङ्कारेण महर्षेः पुरस्तादितरेषां विदुषां तु कथैव केति वस्तु व्यज्यते ।

यथावा––

**राजन् पर्वत मूषिकः स कियती मात्राऽग्रतो मे तमाऽऽनेष्याम्यत्र नियम्य राजसदसीत्थं कत्थमाना भटाः-**
**दिल्लीशस्य निदेशतः परवशा यान्तो दिशं दक्षिणां,**
**तूष्णीमेवनिवेदयन्त्यभिजनायाऽन्त्यं प्रणामाञ्जलिम्॥**

इदं पद्यं मम । ।।२१।।

दिल्लीपतेः समक्षं राजसभासु 'शिवाजी तु पर्वतमूषिकमात्रः।' इति कथनेन विकत्थमाना अपि तस्य सेनापतयो भयातिशयात्तां दक्षिणां दिशंसिंहाक्रान्तां विभावयन्तो युद्धाय तत्र गन्तुं नेच्छन्ति, तथाऽपि राजाज्ञया गच्छन्तस्ते तत्रैव स्वावसानं निश्चितं मन्यन्ते इति तथ्यम् अभिजनाय अन्तिमप्रणामाञ्जलिनिवेदनद्वारा भङ्ग्यन्तरेण वर्णितमिति पर्यायोक्तालङ्कारः । तेन च तेषामनिष्टाऽऽशङ्कया तत्परिवारजनानां करुणक्रन्दनादयोऽनुभावा वस्तुरूपा व्यज्यन्ते । पर्यायोक्तं यदा-

देवता—वरुणः । ऋषिः-वसिष्ठः । छन्दः-त्रिष्टुप् । आयद्रुहावेति—यद् यदा देवो वरुणः अहं च सख्य-भावरूपाँ नावम् आरुहाव । यद् यदा तां नावं समुद्रं मध्यं समुद्रस्य मध्यभागं प्रति प्रेरयाव । भगवता सह सख्यभावजन्यानामानन्दानां पराकाष्ठा हि समुद्रस्य मध्य भागः । तामारूह्य यदा आवाम् अयाम तेषामानन्दरूपजलानाम् अधि उपरि + स्नुभिः तत्रत्यतरङ्गाग्राँशिखरैः सह पर्यायेण उपरि अधश्च अचराव तदा शुभे शोभने प्रेङ्खे प्रेङ्खोलिकायाम् ( लोके झूलाहिंडोला इति ) प्रेङ्खयावहै दोलायाम् आन्दोलनानन्दम् अविन्दावहि स्नुः । प्रस्थः सानुरस्त्रियाम् । इत्यमरः' स्नुपदमिह आनन्द-तरङ्गशिखराभिप्रापकम् ।

मन्त्रेऽस्मिन् प्रस्तुतं भक्तभगवतोः सख्यभावं विषयं निगीर्य तस्य अप्रस्तुतेन विषयिणा नावा, तथा जीवन्मुक्तिदशायाम् अनुभूयमानस्य सख्य-भावजन्यस्य परमानन्दस्य च समुद्रेण अभेदा-ऽध्यवसानादतिशयोक्तिः । तया च ब्रह्मानन्दात्मकैस्तरङ्गशिखरैः सह नावः = सख्यभावनासिक्त-चित्तवृत्तेः ऊर्ध्वाऽधोगमनम् प्रेङ्खायां प्रेङ्खोलनम् इति तयोः बिम्बप्रतिबिम्बभावबोधनात् निदर्श-नाऽलंकारो व्यज्यते (संभवन् वस्तुसम्बन्धोऽसंभवन् वापिकुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ।। इति तल्लक्षणात् । ) अस्य सख्यभावस्य स्पष्टनिर्देशः पंचममन्त्रे "क्व त्यानि नौ सख्या बभूवुः सचावहै यदवृकं पुराचित्० ।। ऋ. ७।८८।५। मन्त्रेषु द्रष्टव्यः । अपि च—

**यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।**
**आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ।।**
**यजु० १२।८५।**

देवता—वैद्यः । ऋषिः-भिषक् । छन्दः-अनुष्टुप् । यदिमा०—वाजयन् रोगिणः, रोगस्य च प्रकृतिं, तन्निदानं, चिकित्साम् ओषधीनां गुणधर्मादिकं च सम्यग् जानन् अहं वैद्यः, यद् यदैव इमा ओषधीः रोगिणे दातुं हस्त आददे गृह्णामि तदैव तद्ग्रहण-समकालमेवेत्यर्थः । यक्ष्मस्य रोगस्य आत्मा तथा नश्यति यथा जीवगृभः वधस्थानं प्रति नीयमानस्य पशोर्मानवस्य वा आत्मा जीवनं वधात् प्रागेव नश्यति "क्षेत्रज्ञ आत्मा पुरुषः ।" इत्यमरः । स हि भयातिशयात् आत्मानंमृतमेव मनुते । "जीवन्नेव यो हिंसार्थं गृह्यते आघातस्थानं नीयते स जीवगृप् । तस्येति ।" यजुर्वेदभाष्ये श्रीमहीधरः । "हृग्रहोर्भ-श्छन्दसि" इत्यनेन हस्य भत्वम् । ओषधिप्रयोगात् प्रागेव रोगनाशवर्णनात् कारणात् प्राक् कार्योत्पत्ति-रूपाऽतिशयोक्तिः । "भेदेऽप्यभेदः, सम्बन्धेऽसम्बन्ध-स्तद् विपर्ययौ । पौर्वापर्याऽत्ययः कार्यहेत्वोः सा पंचधा ततः ।" साहित्यद० परि० १०, कारि० ४७ । सा च ओषधिं विनाऽपि रोगनाशवर्णनात् हेतुं विना कार्योत्पत्तिरूपां विभावनां व्यनक्ति । इति कवि प्रौढोक्तिसिद्धाद् व्यंजकाद् अतिशयोक्त्यलङ्कारात् अलंकार ध्वनिः । नाशो देहस्यैव न नित्यस्या-ऽऽत्मनः आत्मा च देहदेहिभावसम्बन्धेन भौतिके देहे निवसति, न तु वातपित्तादिधातुवैषम्यरूपे रोगे । तथापि यक्ष्मस्य आत्मनो विनाश इति वचनेन रोगस्य मूलतो विनाशो व्यज्यते । ओषधि-प्रदानात् प्रागेव रोगोपशमकथनेन वैद्यस्य कुशलता रोगिण आश्वासः स्वजनानां विश्वासातिशयश्च व्यङ्ग्यः । एवमत्र 'वस्तुव्यंजनापि' दृश्यते ।

अस्मिन् अर्थशक्त्युद्भवध्वनिप्रसङ्गे श्रीरस-गङ्गाधरकाराः "प्रतिभानिर्वर्तितत्वाऽविशेषाच्च कवितदुम्भितवक्तृप्रौढोक्तिनिष्पन्नयोः ( कवि कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नयोः ) अर्थयोर्न-पृथग्भावेन गणनोचिता । उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः । " इति प्रतिपादयन्तो यत् कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य ध्वनेश्चतुरोभेदान् नाऽभिनन्दन्ति तन्न रुचिरम् । कवि प्रौढोक्ति सिद्ध-भेदेभ्यःकविनिबद्धवक्तृप्रौढोक्तिसिद्धभेदेषु स्पष्टमेव पृथग्विध सौन्दर्यदर्शनात् ।

तथा हि--

**हल्दीघाटी हृदयनिहितां धूलि मद्यापि यत्नाद्**
**रक्तां रक्तैरवति समरे दत्तदेहाहुतीनाम् ।**
**यत् पौलोमी तिलककरणायाऽङ्गरागाय चाऽन्ये**
**पुण्यामेनां दिविदिविषदो दुर्लभां कामयन्ते ।।२३।।**

पद्यमिदं मदीयम् ।

दिल्लीपतिसम्राट् सैन्यैः सह समरे समर्पित-जीवनानां राजपुत्राणां शोणितेन शोणवर्णां धूलिं हल्दीघाटी स्वहृदये निगूह्य अद्यापि यत्नाद् रक्षति । तत्र हेतुमाह--यतः स्वभाले तिलकरचनार्थं शची, निजदेहेऽङ्गरागाय चेतरे देवराजादयः पावनीमिमां स्वर्गे दुर्लभां मन्यमाना जिहीर्षन्ति ।

तथा--ममैव द्वितीयं पद्यम्--

**रक्तं रक्तैरिह विजहतां देशधर्मप्रतिष्ठा-**
**रक्षायज्ञे वपुरपि, रजो दुर्लभं रक्षतेदम् ।**
**यस्मादस्मै स्पृहयति शची त्यक्तकस्तूरिकेति-**
**हल्दीघाटी कथयति जनान् पक्षिणां कूजितेन।।२४।**

भो भारतीया! धर्मस्य देशस्य च प्रतिष्ठारक्षार्थं युद्धयज्ञे निजदेहमपि हुतवतां वीराणां रक्तैरक्त-मिदं रजो यत्नेन रक्षत । यतो देवराजस्येन्द्रस्य भार्या शची कस्तूरीकङ्कुमादिकमपि तिरस्कृत्य पावन-मिति धिया स्वमस्तके तिलकरचनार्थम् इदं रजो जिहीर्षति--इति रहस्यं हल्दीघाटी पक्षिणां कूजित-व्याजेन कथयतीव । नेदं पक्षिणां कूजितं किन्तु हल्दीघाट्याः हितवचनमित्यपह्नुतिरलङ्कारः । शच्यास्तादृशव्यवहाराऽसम्बन्धेऽपि सम्बन्धवर्णना-दसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः । तथा च कस्तूरिकायाः अपेक्षया रजस उत्कर्षव्यञ्जनाद् व्यतिरेकः ।

पद्ययोरनयोर्विवक्षितविषयसाम्येऽपि वर्णनशैली-भेदात् सौन्दर्यसम्बन्धे तयोरौत्तराधर्मं सर्वस-हृदयसंवेद्यम् । तत्र हेतुश्च अवक्तॄणां वक्तृभाव-कल्पनया तदुक्तौ सजीवतावतारो नाटकीय-तायाः प्रभावतीव्रता अमूर्तेषु मूर्तत्वोपधानात् तेषां प्रत्यक्षायमाणता चेति ।

यथा वा--

**राजन्राजसुता न पाठयति मां,**
**देव्योऽपि तूष्णीं स्थिताः ।**
**कुब्जे भोजय मां कुमार-**
**सचिवैर्नाऽद्यापि किं भुज्यते ?**
**इत्थं राजशुकस्तवारिभवने**
**मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्य**
**शून्यवलभामेकैकमाभाषते ।।**
**साहित्य१दर्पणे परि० १०। कारि० ६४।**

इह शुकं वक्तारं प्रकल्प्य तन्मुखवर्णितया अप्रस्तुतया शत्रुभवनदशया स्तूयमानस्य प्रस्तुतस्य राज्ञः प्रतापवर्णनं काममप्यपूर्वां विच्छित्तिमावहति । यथा च प्रबोधचन्द्रोदये अमूर्तं क्रोधं वक्तारं प्रकल्प्य--

**अन्धीकरोमि भुवनं बधिरीकरोमि,**
**धीरं सचेतनमचेतनतां नयामि ।**
**कृत्यं न पश्यति, न येन हितं शृणोति,**
**धीमानधीतमपि न प्रति सन्दधाति ।। अं० २**

इत्यनेन तदीयवाक्येन क्रुद्धस्य पुंसो व्यवहार-निरूपणद्वारा अमूर्तोऽपि भावः क्रोधो मूर्तिमान् कृतः ।

इयं कविनिबद्धवक्तृप्रौढोक्तिः क्वचित् प्रश्नोत्तरशै-ल्योपस्थापिताऽधिकतरं चमत्कारमाविष्करोति ।

---

१. अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवाऽरयः पलायिता इति कारणं प्रस्तुतम् । कार्यमपि वर्णनाऽर्हत्वेन प्रस्तुतमिति केचित् । अन्ये तु (काव्यप्रकाशकृतस्तु) राज-शुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैवे-त्याहुः।। इति साहित्यदर्पणस्य दशमपरिच्छेदे पर्यायोक्तालङ्कारप्रसङ्गे । कारि० ६० ।

यथा--

**कालिन्दि, ब्रूहि कुम्भोद्भव, जलधिरहं,**
**नामगृह्णासि कस्माच्छत्रोर्मे ?**
**नर्मदाऽहं त्वमपि वदसि**
**मे नाम कस्मात् सपत्न्याः ?**
**मालिन्यं तर्हि कस्मादनुभवसि ?**
**मिलत्कज्जलैर्मालवीनां नेत्राम्भोभिः,**
**किमासां समजनि ?**
**कुपितः कुन्तल क्षोणिपाल ।।**

**कुवलयानन्दे० ।।**

पद्येऽस्मिन् स्वश्यामतानिमित्तं प्रति समुद्रेण पृष्टा नर्मदा मालवीनां रोदनं तस्याऽपि निमित्तं तासां वैधव्यहेतुं कुन्तलेश्वरस्य क्रोधमकथयत् । एतेन कल्पितयोर्द्वयोर्वक्त्रोरप्रस्तुतेन संवादेन प्रस्तुतं कुन्तलेश्वरप्रतापवर्णनं नितरां मनोहारि ।

इहकविनिबद्धवक्तृप्रौढोक्तिसिद्धेन भ्रान्तिमताऽलङ्कारेण निश्चयात्तस्य सन्देहस्य अथवा श्रीविश्वनाथेन निरूपितस्य निश्चयालङ्कारस्य ध्वनिः । नर्मदायाः श्यामत्वहेतं मालवीनां सकज्जलदृग्जलमिलनस्य कथनेन कालिन्दीत्वरूपभ्रमनिरासे नर्मदैवेयमिति स्थापनात् ।

"अन्यान्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ।" इति तल्लक्षणं साहित्यदर्पणस्य १०मपरिच्छेदे ३६तमकारिकायाम् । अत्र नर्मदैवेयं न कालिन्दीत्यनुक्तेऽपि तत्प्रतीते निश्चयस्य व्यंजनैव । किं च– यदि प्रस्तुतेन कुन्तलेश्वरस्य कोपेन कारणेन प्रस्तुतस्य मालवेन्द्रवधस्य कार्यस्य व्यञ्जना तदा अप्रस्तुतप्रशंसा । अथ कुन्तलेश्वरकोपोऽपि मालवेन्द्रवधवत् प्रस्तुत एव तदा उभयोः कारणकार्ययोः प्रस्तुतत्वात् पर्यायोक्तालङ्कारः । पर्यायोक्तं यदा भङ्ग्या गम्यमेवाऽभिधीयते । साहित्य०, १०म परि०, कारि० ।

यथा वा--

**ग्रासार्जनाय शुक यज्जनरञ्जनेन**
**त्यक्त्वाऽऽत्मनः परगिरं त्वमुरीकरोषि ।**
**किं भुज्यते तदपराधफलं त्वयेदमा-**
**जीवनं कठिनपञ्जरसंस्थितेन ? ।।२५।।**

**शुकस्योत्तरम्--**

**वाचा वदामि विवशोऽन्यगिरं हृदा न**
**नैवाऽस्मि यूयमिव तेन च गर्वितो वा ।**
**स्यां दण्डितो यदि तथापि,**
**दशाऽस्तु का वः स्वेच्छानिरस्त-**
**निजसंस्कृतिवेशवाचाम् ।।२६।।**

एते पद्ये मामकीने ।

हे शुक त्वं यज्जनरञ्जनेन ग्रासार्जनाय निजगिरं परित्यज्य परभाषामङ्गीकरोषि, किं तवाऽयं पञ्जरेऽवरोधस्तस्यैवाऽपराधस्य फलम् ? शुकः प्रतिवदति । भो मानव अहं तु प्राक्कृतस्य कस्यचित्पाप्मनो दुर्विपाकवशात् पञ्जरबद्धो विवशः सन् परगिरमुद्गिरामि, तामपि कण्ठमात्रेण न तु हृदा । यदि तथापि दण्डनीयोऽस्मि संवृत्तस्तर्हि ये मानवाः स्ववेशभाषासंस्कृत्यादिकं स्वेच्छया तिरस्कृत्य हीनमपि परकीयमेव सर्वमङ्गीकुर्वन्ति तेन च गर्वमनुभवन्ति तेषां का दशा भविष्यति ? अत्र "नैवाऽस्मि यूयमिव तेन च गर्वितोवा ।" इति शुकोत्तरे स्ववेशभाषादितिरस्कर्तारस्तिर्यग्भ्योऽपि हीनतरा इति व्यतिरेकः । "उपमानाद् यदन्यस्य व्यतिरेकः स एव सः" इति तल्लक्षणं काव्यप्रकाशे दशमोल्लासे । अत्र कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन व्यतिरेकालङ्कारेणस्ववेशभाषादितिरस्कारस्य हीनभावनयाऽन्येषामन्धानुकरणस्य च गर्हारूपं वस्तु व्यज्यते ।

विषयप्रतिपादनस्य शैलीयं वैदिककवये (परमात्मने) नितरां रोचते । अतो भावनाप्रधानेषु

प्रसङ्गेषु प्रभावातिशयजननाय स कदाचिदिमामेवाऽनुसरति ।

अस्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य ध्वनेरपि १. व्यंजकेन वस्तुना व्यंग्यस्य वस्तुनः, २. वस्तुना अलङ्कारस्य, ३. अलङ्कारेण वस्तुनः, ४. अलङ्कारेण अलङ्कारस्य च व्यंजनात् पूर्ववदेव चत्वारो भेदाः संभवन्ति ।

तेषु अर्थशक्त्युद्भवध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिरूपो नवमो भेदः ।

**रमध्वं मे वचसे सोम्याय ऋतावरी रुपमुहूर्तमेवैः ।**
**प्रसिन्धुमच्छा बृहती मनीषाऽवस्यु रह्वे कुशिकस्य सूनुः**
**ऋक् ३। ३।५।।**

**इन्द्रो अस्मानरदद् वज्रबाहु-**
**रपाहन् वृत्रं परिधिं नदीनाम् ।**
**देवोऽनयत् सविता सुपाणिस्तस्य**
**वयं प्रसवे याम उर्वीः ।। ऋग् ३।३३।६**

नदीः प्रति ऋषेर्विश्वामित्रस्येयमुक्तिः । ऋतमुदकमृतद्वत्यः ऋतावर्यो नद्यः । हे ऋतावर्यः वर्षासु प्रभूतजला यूयम् । सोम्याय मधुराय मे वचसे मम वचनं श्रोतुम् । मुहूर्तम् क्षणं यावत् एवैः गमनैः उपरमध्वम् विरमत जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् इत्यनेन एवेभ्य इति पञ्चम्याः स्थाने तृतीया प्रयोगश्छान्दस । एवैरिति एवैर् गतिः । कुतो नु वयमुपरमेमहीति चेत् ? कुशिकस्य प्रार्थनाकर्तुः जलप्लावनकष्टेन क्रन्दितुः जनसमूहस्य सूनुः सुतः पुत्रवत् प्रतिनिधिरहम् । अवस्युः युष्माकं जलैराप्लावितप्रदेशस्य पीडितजनानां रक्षणमिच्छन् । अवरक्षणे धातोः अवनम् अवस् तेन सुप आत्मनः क्यच् (पाणि० ३।१।८) इति क्यचि, क्याच्छन्दसि ( पाणि० ३।२।१७० ) इत्यु प्रत्यये रूपम् । अथवा-अवनम् अवः । ततः सर्व प्रातिपदिकानां क्यचि लालसायां सुगसुकौ । इत्यनेनअवस्यतीत्यवस्युः । क्याच्छन्दसीत्यु प्रत्यये अवस्युः । सिन्धुम्—सिन्धुः स्रवणादिति निरुक्ते श्री यास्कः । अथवा सीमानं स्वकूलयोः कूलवर्तिनां प्रदेशानां वा धुनोति उल्लंघ्य गच्छतीति सिन्धुः । त्वाम् अच्छा-अभिलक्ष्य आभिमुख्येनवा । बृहतीमनीषा बृहत्यामनीषया महता मनोयोगेन । स्तुत्या प्रज्ञयावेति श्रीयास्कः । प्राऽह्वे आह्वयामि प्रार्थये । कोऽसौ कुशिकः ? कुशिकः क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः । साधु विक्रोशयितार्थानाम् । इति निरुक्ते यास्कः । अध्या०२। पा० ७। ख० २५) स्वमनोभावानां सम्यक् प्रकाशने कुशलः । तस्य सूनुः पुत्रवत् प्रतिनिधिः सोऽपि तद्गुणविशिष्टः । स च विश्वामित्रः सर्वेषां मित्रत्वमुपगतो न कश्चिद्व्यक्ति विशेषः । उपरमध्वम् इत्यत्र वर्षासु प्रवृद्धोदकाः सर्वाः सरित उपलक्ष्य बहुवचनेन निर्देशः उत्तरार्धे सिन्धुं त्वामित्यत्र प्रत्येकमभिलक्ष्य पृथक् प्रार्थनाया मेकवचनम् ।

द्वितीयमन्त्रे नदीनामुत्तरम् । वज्रबाहुरिन्द्रः सूर्यः, मध्यस्थानः ( विद्युदात्मा ) परमेश्वरो वा । नदीनाम् नभसि नदन्तीनां मेघस्थानाम् अपाम् । परिधिं परितो धीयते इति, सर्वतो व्याप्यभूमौ पतनात् प्रतिरोद्धारम् वृत्रं मेघम् । जघान । तेनाघातेन मेघे भिन्ने सति अवरुद्धानि जलानि धारा रूपेण पतितानि "वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवेगिरौ ।" इत्यनेकार्थसंग्रहे श्रीहेमचन्द्राः । सविता सर्वप्रेरकः । सुपाणिः शोभनाः किरणरूपाः पाणयो यस्य सः । देवो दानाद्वा, दीपनाद्वा विद्युदात्मा प्रवहन्तीभिर्जलधाराभिर्नो गमनमार्गान् अरदत् अखनत् । रद विलेखने । तस्यैव देवस्य प्रसवे आदेशे प्रेरणायां वा विद्यमाना वयम् उर्वीर्महत्यो नद्यो यामः सततं गच्छामः । अनेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना तत्र प्रार्थनाश्रवणाय नाऽस्त्यस्माकमवकाश इति वस्तु व्यज्यते ।★

( क्रमशः )

# स्वर्गतः सर्वपल्ली राधाकृष्णमहोदयः

विद्याभूषणः श्रीगणेशराम शर्मा

श्रीराधाकृष्णमहाभागस्य जन्म मद्रासप्रदेशस्य चितूरमण्डलान्तर्गते तिरुतनीनामके ह्येकस्मिंल्लघुनिग्रामे किलैकस्मिन्निर्धने किन्तु पवित्रे ब्राह्मणपरिवारे समभूत् । यथा स स्वयमेव स्वकीयायामात्मकथायामलेखीत् तस्य मातापितरौ धार्मिकप्रवृत्तिकावास्ताम् । तयोः सविधेनाधिकं धनं सम्पत्तिर्वाभूताम् । तद्गृहे सर्वेषामपि सदस्यानां न्यूनाधिकं संस्कृतभाषाया ज्ञानमासीत् । तस्य पिता खल्वेकस्य भूस्वामिनोऽन्तिके मण्डलाधिकारिणः कार्यं सम्पादयति स्म । तस्य मासिकं वेतनं केवलमष्टौ रूप्यकाणामासीत् । एतावतैव द्रव्येण स कथमपि गृहव्ययं निर्वाहयति स्म । तस्यैवंविधा दयनीयार्थिकी स्थितिः समभूत्तथापि धार्मिके वातावरणे राधाकृष्णमहाभागस्य लालनं, पालनं, पोषणं चाभूत् ।

अथ बालको राधाकृष्णस्तिरुतनीग्रामे दर्शनार्थमागतान् यात्रिणः पश्यति स्म तदा मननशीलस्वभावाद्धेतोश्चिन्तयति स्म यदिमे यात्रिणो लोकाः किमर्थमेतावतो दूरात्तदिदं संकीर्णं स्थानमागच्छन्ति ? दर्शनकरणात्तेभ्यः को नु बत लाभो भवति नाम ? एवंविधा विभिन्नाः प्रश्नास्तस्य मस्तिष्के ननूहापोहाञ्जनयन्ति स्म किन्तु तत्समाधानं किमपि न भवति स्म । यदाप्यसौ बालो राधाकृष्ण एकाकी तस्थौ तदा किमपि चिन्तनमकरोत् । निर्धनान् दरिद्रान् ग्रामीणान् दर्शं दर्शं तद्हृदये कापि व्यथा समुत्तस्थे, कश्चिदेकः प्रहाराघात इव भवति स्म । स तदा कथयति स्म, "वराका निर्धनाश्चापीमेऽत्रागमने क्रियद्द्रव्यव्ययं कुर्वते ! कियानात्मविश्वासोऽस्त्येषु ! स्वस्य सर्वाण्यपि च कार्यजातानि त्यक्त्वात्रागच्छन्तीमे ! एतेषां पुरतोऽन्नपानादिकमेव न हि धर्मोऽपि च वर्तते ! ईश्वरोऽपि चास्ते !"

'सम्पत्स्यमानवृक्षस्य स्निग्धाः स्युर्ननु पल्लवाः ।' इत्युक्त्यनुसारं प्रारम्भत एव राधाकृष्णः स्वात्मनोऽलौकिक्याः प्रतिभायाः परिचयं प्रददानोऽभूत् । विद्याभ्यसनमेव तस्यैकमात्रं व्यसनमभूत् । विद्यालयजीवने सोऽतीव सरलतयाऽवर्तत । सेयं विवशतासीत् । छात्रवृत्तिरुपलभ्यते स्म तथा किंचित् स्वगृहत आनाय्य स कथमपि येन केन प्रकारेण स्वनिर्वाहं कुरुते स्म ! कुशाग्रबुद्धित्वाददद्भुतस्मरणशक्तेश्च हेतोस्तत्सहाध्यायिनस्तं चलविश्वकोषमवदन् । केषांचिल्लोकानामियं धारणास्ते यद्धि छात्राः पाठशालासु, विश्वविद्यालयेषु वाध्ययने प्रथमश्रेणीका विद्यार्थिनो भवन्ति ते प्रायेण ग्रन्थकीटा भवन्ति तथा जीवनसङ्घर्षे पततामेव तेषां प्रतिभाच्छिन्नभिन्नासती प्रणश्यतीति । परन्तु नियमस्यास्य सर्वतो महापवादरूपास्त एते खल्वाचार्या राधाकृष्णमहाभागा अभूवन् । अध्ययने कुशाग्रधिषणाश्चापीमे व्यावहारिके जीवने कर्मठास्तथा च व्यावहारिके जगति पदार्पणं कृतवतामेवैतेषां प्रतिभा यथापूर्वमकुण्ठिता बभासे वरञ्चानुभवात्सा भृशं दिदीपे ।

प्रत्येकस्य मनुष्यस्य जीवने शिक्षाया महत्त्वपूर्णं स्थानं भवति । राधाकृष्णमहोदयः स्वयं तस्यात्मकथायामलेखीत्--"ख्रिष्टीय धर्मसंस्थास्वहं पाठशालायां, विद्यालयोचितां च शिक्षामलभे । स्वजीवनस्य महत्त्वपूर्णे काले मम 'न्यूटेस्टामेण्ट' इत्यस्य शिक्षाभिः परिचयेन साकमीषवीयधर्मप्रचारकाणां, तासामालोचनानामपि च ज्ञानमभूद्यास्ते भारतीयधर्मस्य, संस्काररीति-प्रथादीनां चाकुर्वन् । स्वामिनो विवेकानन्दमहाभागस्य भाषणानां तस्य च साहसपूर्णानां कार्याणां मयि भूयान् प्रभावः पपात । तथाह-

मात्मनो हिन्दुधर्मस्याभिमानं वोढुमारभे । परन्तु ख्रिष्टीयानां संस्थासु हिन्दुधर्मेण सह यो हि दुर्व्यवहारो भवति स्म तत्कारणान्मम हृदि महानाघातो भवति स्म । अस्माकं समग्रस्य ज्ञानस्य, कर्मणश्चाधारो भारतीया संस्कृतिर्वर्तते । ये हि तपस्विनः शिक्षकाश्च संसृतये किलैवंविधां महतीं संस्कृतिं प्रददुस्तथा तया सह संसारस्य सम्पर्कं स्थापयामासुस्ते वस्तुतो धर्मात्मानो नाभूवन्–सेयं वार्ता मम बुद्धिग्राह्या नैव भवति स्म । ख्रिष्टधर्मावलम्बिभिः कृता हिन्दुधर्मस्यालोचना मां हिन्दुधर्मस्याध्ययनाय विवशं चक्रुः । हिन्दुधर्मस्य जीवितां प्रणष्टानां च तत्त्वानामनुसन्धानाय ते प्रबलमाग्रहं चक्रिरे । समय-प्रवाहो मे तमिमं निश्चयं समधिकं सुदृढमकरोत् ।"

राधाकृष्णमहाभागस्य सर्वप्रथमं 'वेदान्ते नीतिशास्त्रम्' इत्यस्य पुस्तकस्य प्रकाशनं विंशतिवर्षाणामायुषि समभूत् । पुस्तकस्यास्य मुखपृष्ठे स्वकीयं नाममुद्रिताक्षररूपं दृष्ट्वा सोऽतीव मुदमन्वभूत् । आलोचकानां कथनमस्ति यद्वेदान्ते नीतिशास्त्रस्याभावो विद्यत इति । तस्यायं ग्रन्थस्तथाविधाया आलोचनाया उत्तररूपः प्रासिद्धयत् । प्राध्यापक रा· जी· हौगमहाशयो, यो हि राधाकृष्णस्य दर्शनशास्त्रस्य प्राध्यापकोऽभूद्यश्च धार्मिकेषु विषयेष्वतीव सूक्ष्मेक्षिकया मार्मिको मीमांसकोऽभूत्, ग्रन्थस्यास्य सम्बन्धि तस्य प्रमाणपत्रं प्रादाद्यदद्यापि राधाकृष्णमहाभागस्य कर्गलसंहतौ सुरक्षितं स्यादवधृतम् –– "स्नातकोत्तरोपाधिलाभाय स्वस्य शिक्षणकालस्य द्वितीये वर्षे स (राधाकृष्णः) यं हि महाप्रबन्धं ( थीसिस ) लिखितवान् तस्याध्ययनादेतत् प्रकटीभवति यत्तस्य दार्शनिकीनां समस्यानां प्रमुखानामङ्गानां च सविशेषं ज्ञानमास्ते । आंग्लभाषायाः साधीयसाधिकारेण सार्द्धं युक्तियुक्तानां तर्कोहापोहाणामवबोधस्यापि तस्य योग्यता वर्तते ।"

सोऽयं श्रीराधाकृष्णमहाभागः स्वजीवने व्याख्यातृरूपेण पदार्पणं समकरोत् । स खलु षष्ठीरूप्यकाणां मासिकं वेतनं लभते स्म । सोऽतीव कुशलोऽथ सफलश्चाध्यापकः समसिद्धयत् । तद्विद्यार्थिनो दर्शनशास्त्रस्य कक्षायां तथैव रसास्वादनमकुर्वन् यथा साहित्यसंगीतकलादीनां छात्राः प्रायेण कुर्वन्ति । तस्यांग्लभाषाया ज्ञानमतीव प्रौढं सुन्दरं साधिकारं चासीत् । न केवलं स भाषाया अस्याः पण्डित एवापितु तत्साहित्यस्यापि च मर्मज्ञो महानासीत् । कक्षायां च स यथार्थनामा प्राध्यापक इव ज्ञानविस्तारमकरोत् किन्तु बहिः कक्षं स छात्रैः सह तथैकरसो भवति स्म यत्तस्य परिचितिरपि कठिना भवति स्म । स स्वान्तेवासिनः स्वात्मनः पृथङ् न मेने ।

विश्वकवीन्द्रस्य रवीन्द्रनाथठाकुरमहोदयस्यानुपमानां कृतीनां राधाकृष्णोपरि गम्भीरः प्रभावो निपपात । स हि स्वात्मकथायामलिखत्––"हिन्दुनीतिशास्त्रेषु मायावादसिद्धान्ते चाहं श्रीरवीन्द्रनाथटागोरमहाभागस्य रचनाभ्यो महतीं हि प्रेरणामलभे । अहं तस्य रचनानामांग्लभाषानुवादानपठम् तथा तत्परिणामस्वरूपमेकं पुस्तकं चालिखम् यद्धि सन् १६१८ईसवीये वर्षे मेकमिलनेति लन्दननगरस्था प्रकाशनसंस्था प्राकाश्यं निन्ये । तरुणावस्थायामपरिपक्वविचाराणां कारणाद् ये ये दोषा भवितुं सम्भवन्ति, ते सर्वे पुस्तकेऽस्मिन्नवर्तन्त । सत्यप्येवं प्रजाजनैरेतस्य स्वागतमकारि । गुरुदेवायापि च पुस्तकमिदमतीव रुचिकरमाभात् । रवीन्द्रनाथो राधाकृष्णमहोदयं प्रति सन् १६१८ईसवीये वर्षे दिसम्बरमासे पत्रमेकमलेखीत् –– "यस्य पुस्तकस्य मया सह सम्बन्धोऽस्ति तस्य समालोचनमुचितं न भवति तथाप्यहमेतावद्वक्तुं पारये यत्तदिदं पुस्तकमाशातोऽधिकं सुन्दरमस्ति । यद्भवानेतत् सुन्दरं पुस्तकमलिखत्, कदाचिदेवास्यापेक्षयान्यः कश्चिदतोऽधिकं सुन्दरतरं पुस्तकं लिखितुं सक्षमोऽभविष्यत् । पुस्तकलेखने भवान् यं परिश्रममकरोत्तथा च सूक्ष्मपर्यवेक्षणस्य परिचयं प्रादात्तस्मादहमा-

श्चर्यमत्र भवम् । भारतीं भाषायां साहित्यिकं सौन्दर्य-मास्ते तथा सा व्यर्थालङ्कारैराडम्बरेण च मुक्तास्ति । एतत्कृतेऽहं भवद्भ्यो धन्यवादानर्पयामि ।" तदिदं पुस्तकं राधाकृष्णमहाभागमेकं चिन्तकं तथा लेखकनाम्ना निखिलेऽपि च विश्वस्मिन् सुप्रसिद्धं चक्रे ।

'जार्जपञ्चम – मानसिकाध्यात्मविद्या' इति पीठेऽस्याचार्यस्य राधाकृष्णमहाभागस्य प्राध्यापकत्वेन नियुक्तिस्तस्य जीवनस्यैका महत्त्वपूर्णा घटनास्ते । इदमेव पदमधितिष्ठता तेन स्वजीवनस्य सर्वोत्तमा कृतिः--'भारतीयदर्शनस्येतिहासो' भागद्वये व्यरच्यत । सा च कृतिरिङ्गलैण्डतः प्राकाश्यत । तस्येमं महाग्रन्थं विन्सेण्टशियेनमहाशयः 'संस्कृतविद्वत्तायाः प्रकाशस्तम्भः' इत्यकथयत्, यस्य तुलनायां शर्मण्यदेशेऽपि च न कोऽपि ग्रन्थो विद्यते ।

अथास्य राधाकृष्णमहाभागस्य विदेशयात्रायाः प्रारम्भोऽष्टत्रिंशद्वर्षावस्थायामभूत् । ब्रिटिशसाम्राज्यान्तर्गतानां विश्वविद्यालयानां सम्मेलने कालिकाता विश्वविद्यालयस्य प्रतिनिधिरूपेण स इङ्गलैण्डमगच्छत् । तत एव चान्ताराष्ट्रियदर्शन–सम्मेलने भागं गृहीतुममेरिकादेशं ययौ । तत्रत्याः प्रजास्तमिमं राधाकृष्णमहाभागं 'द्वितीयो विवेकानन्दः' इति नाम्ना सम्बोध्य तत्सम्मानमकुर्वन् ।

श्रीपालब्रन्टनमहाशयस्य शब्देष्वाचार्यवर्यस्य राधाकृष्णमहाभागस्य–आक्सफोर्ड – विश्वविद्यालये पौर्वात्यधर्माणां तथा नीतिशास्त्रस्य च प्राध्यापकत्वेन नियुक्तिस्तस्य धार्मिकजीवनस्य तथा विश्वस्य सांस्कृतिकेतिहासे किलैकोल्लेखनीया घटनास्ते । अस्या नियुक्तेः परिणामस्वरूपं राधाकृष्णमहोदयो भारतीयसंस्कृतेश्चिरन्तनं सन्देशं यूरोपीयानां हृदयान्तःपर्यन्तं प्रापयितुं सक्षमोऽभूत् ।

अथाचार्यवर्यस्य राधाकृष्णमहाभागस्य मानवतायां सुदृढीयानविचलश्च विश्वासोऽभूत् । अथ चैकदा तस्मा एकोऽभिनन्दनग्रन्थः समर्पितो यस्मिंस्तस्य मानसिकीनां, धार्मिकीनां च विशिष्टतानां वर्णनप्रसङ्गे सः 'साधु पुरुषः' प्रोक्तः । तस्योत्तरं प्रददानेन तत्र तेनोक्तमभूत्--'नाहं साधुर्वा महात्मा वावर्ते, अतोऽहं जीवनोपभोग्यानां सामान्यसुखानां पारिवारिकस्य स्नेहस्य, प्रेम्णो, मित्रताया, विश्वासस्य, भक्तेश्चानन्दमुपभुञ्जे, यदा चैतेषां पवित्राणामात्मिकसम्बन्धानामपहरणं वाऽभावश्च भवति तदानेन मे मानसी व्यथा भवति । अहं हि साधुत्वापेक्षया मनुष्यत्वमेवोपभोक्तुं कामये ।'

राधाकृष्णमहाभागस्यैतत् कथनमस्ति, यन्मनुष्यजीवनस्योद्देश्यं भोगविलासादिकं नास्ति वरञ्चैकस्य महोद्देशस्य पूर्तिरास्ते । नायं संसारो मिथ्यास्ते, परन्त्वेकं नैतिकं क्षेत्रं तथा च मोक्षस्य मार्गो वर्तते । अथ च जीवनं नाम स्वप्नो नास्ति, प्रत्युत सत्यं विद्यते । राधाकृष्णमहोदयस्यायं विश्वासोऽस्ति यत् संसारे साफल्यापेक्षया सौजन्यं श्रेष्ठतरं हि वर्तते । मानवतैव राधाकृष्णस्य धर्मो विद्यते । स खल्वस्मद्युगीनो विदेहोऽभूद्यः संसारे निवसन्नपि मोहमायाभ्यामतीतोऽभूत् । स खलु 'वसुधैव कुटुम्बकम्' सममन्यत । वैदिककालीना महर्षय इव स तमिममादर्शं विश्वस्य कोणं प्रतिकोणं पर्यटन् सन् पर्यपालयत् तदेव प्रत्यपादयच्च ।

अथ राधाकृष्णमहाभागः परिचितैर्जनैः सह सविशेषमानन्दमनुभवति स्म । अपरिचितानां लोकानां मध्ये सविशेषं चेष्टमान एव हि स कार्यकलापन्निर्वोढुं पारयते स्म । कामं कोऽपि वृद्धो वा, युवको वा, दीनो वा, सम्पन्नो वा भवतु, स सर्वैरपि समानं व्यवहरति स्म तथा च सर्वैरपि समरसं सौहृदमात्मीयतां च संस्थापयति स्म । तस्मै केनापि जनेन सहैकवारं क्षणमात्रमपि मिलनस्य, सम्भाषणस्य चावसरः प्रदत्तश्चेत्तदा स तं जनं सर्वदैव स्वकीये स्मृतिपथे समङ्कयति स्म । मिलनसमये सः शनैः शनैर्माधुर्येण नामधामादिकं परिचयं परिपृच्छति स्म । एकदा जातपरिचयो राधाकृष्णमहाभागोयदा

पुनर्मिलनावसरमाप्नोति स्म तदा साक्षात्कारे जात एव हि तन्नामग्राहमेव सम्बोधयति स्म ।

अथैतदपि च पुनर्निर्देशयोग्यं यद्धि गाम्भीर्यमेव हि राधाकृष्णमहाभागस्य सर्वस्वं नासीत् । यदा स छात्राणां किं वान्येषां जनानां समुदायमध्ये समभूत्तदा स खल्वेतदपि चावद्धयद् यत्स किलैको महादार्शनिकश्चिन्तकोऽभूदिति । स खल्वेवंविधान् हासपरिहासान् विनोदगर्भान् वार्तालापान् कर्त्तुं प्रारभते स्म येषामुत्तरमपि दातुं न कश्चन पारयते स्म । यदा कदा स खल्वेतावद्विनोदनिमग्नो भवति स्म यच्छ्रोतारो मुक्तकण्ठं साट्टहासं हसन्तः प्रोत्फुल्लचित्ता भवन्ति स्म । अथ पुनः कदाचित् स एतावत् गम्भीरमुद्रामग्नो भवति स्म यत्तस्य कक्षे शांतेर्निस्तब्धतायाश्च साम्राज्यं परिव्याप्नुते स्म । स खलु हास्यविनोदादिप्रसङ्गेषु महात्मा गान्धिरिवासीत् । प्रत्युत्पन्नमतित्वे स जॉर्ज बर्नार्डशामहाशय इवाभूत् । तेन साकं वार्तालापे महानेवानन्दोऽनुभूयते स्म । कमपि विषयमधिकृत्य भाषमाणः स स्यात्, सदैव तद्भाषणं रुचिकरमेव प्रतिभाति स्म ।

अथ राधाकृष्णमहाभागः सन् १९५२ ई. वर्षे मईमासे स उपराष्ट्रपतिपदमधितष्ठौ । अस्मिन्नेव समयान्तराले सोऽनेकेषां देशानां यात्रामकरोत् । तस्य विदेशयात्राभिर्भारतदेशो द्विगुणं लाभं लेभे । अथ सन् १९५७ ई. वर्षे पुनरुपराष्ट्रपतिपदे निर्वाचितोऽभूत् । सन् १९६२ ई. वर्षे स देशस्यास्य भारतवर्षस्य सर्वतो वरिष्ठं सम्मानितं राष्ट्रपतिपदप्रतिष्ठाया गौरवं प्राप । भारतराष्ट्रस्यास्य राष्ट्रपतिपदे विराजमानोऽयं राधाकृष्णमहोदयः सर्वाणि कार्यजातानि साधिकारं कौशलेन सम्पादयँस्तस्थौ । सर्वविधा जनास्तदन्तिके साहाय्यमाप्तुं, विचारविमर्शार्थिं च व्रजन्ति स्म । सोऽन्येषां सहायतार्थं यथाशक्ति सदैव तत्परोऽस्थात् परन्तु नैतत्प्रदर्शनं तस्मा अरोचत यत् सः किं विधां सहायतां क्व नु कदा कर्तुं प्रभविष्यतीति । यदा कस्मैचित् साहाय्यस्यावश्यकता समभूत्तदा तेनोन्मुक्तहृदयं तद्विहितम् । तस्यैवंविधानां कार्याणां कृते बहवो जनास्तं सकृतज्ञताभारं स्मरन्ति, स्मरिष्यन्ति च । यदि च कदाचित् स कस्यचिज्जनस्य यावदपेक्षितां सहायतां विधातुमसमर्थो भवति स्म, तदा स तं विनम्रैः शब्दैस्तत् कथयति स्म । अथैकदोत्तरप्रदेशस्य श्रीखैरमहोदयो राधाकृष्णमहाभागेन साकं वार्तालापप्रसङ्गमधिकृत्यावोचत् 'स हि परमस्नेहभावेन मिलति । स एष गुणोऽस्मिन्नेव रूपे नेतृवर्येषूपलभ्येत चेत्तदा प्रभूतं कार्यजातं विनैव निवेदनं स्वतः संसिध्येन्नाम नूनम् ।"

राधाकृष्णमहाभागस्य 'महात्मा गान्धिः' इत्यस्य पुस्तकस्य समालोचनां विदधानो दार्शनिकप्रवरो बरट्रेण्ड रसलमहाशयो वाक्यादस्मात्तदारम्भं कृतवान्––"महात्मनो गान्धेः सफलतासु तत्साफल्यस्यैकं मुख्यं कारणमिदमपि चास्ते यत्तस्मै प्राध्यापकराधाकृष्णसदृशस्य जनस्य श्रद्धासमुपलब्धुं सुशका बभूव ।"

विद्यावाचस्पते राधाकृष्णमहाभागस्य भाग्येऽविचलोऽस्ति विश्वासः । स्व जीवने साफल्यस्य कारणमपि च स भाग्यमेवामन्यत । स्वस्य न्यूनाधिकसफलतायाः कारणं विवृण्वानः स स्वात्मकथायां लिलेख––"भाग्यं हि ममानुकूलम् तच्चेदानीं यावन्मां रक्षद्विद्यते । इत्थं प्रतीयते, यद्येषु झंझावातेषु–अन्यान्यास्तरण्यः शिलासङ्घातैः प्रतिहताः खण्डशो विनाशं जग्मुस्तेष्वेव कश्चन कैवर्तको महत्या हि सावधानतया ममोडुपं नीयमानोऽस्ति तारयन् । मयैवमनुभूयते, यत् काप्यज्ञाता शक्तिः किमपि महदुद्देश्यमभिसन्धाय मम मार्गप्रदर्शनं कुर्वाणा तस्थौ । नाहमेतन्मन्ये यद् भगवान् मयि कृपां विधत्ते, परन्त्वेतन्मन्ये, यन्मम जीवने यां कामपि सफलतां न्यूनाधिकामहमलभे, तद् भाग्यस्य महद्योगदानमास्ते । परन्तु नाहमिदमिच्छामि यदहं ममासफलतानां दोषं भाग्यस्य, परिस्थितीनां वा

शिरस्यारोपयेयम् । असफलतानां कृते ममात्मनो दोषा एवोत्तरदायित्वमावहन्ति ।''

अथासौ राधाकृष्णमहाभागो न केवलं सदासर्वदव 'सरलं जीवनमुच्चविचाराः' इत्युक्ति मिमां चिन्तयामासापितु सिद्धान्तमिमं स्वजीवनेऽपि क्रियात्मनाऽन्वर्थतामनैषीत् । वैभवपूर्णं राष्ट्रपतिभवनमधिवसन्नपि नाश्रमाचार्यान्मनागपि च भिन्नधर्मास्ते तस्य वेषभूषान्नपानादिकं, जीवनपद्धतिर्दिनचर्याक्रमः सर्वमपि प्रायेण तथाविधमेवावर्तत यथा तत् पूर्वमभूत् । आसनोपस्करादिकं तत्समन्ततः साधारणमिवानाडम्बरं विततं पर्यस्तं च सन्तिष्ठते स्म । स स्वयमेकं पर्यङ्कमधिशयानोऽध्ययनपरोऽथवा लिखन् विलिखँस्तस्थौ । तस्य समीपे काष्ठमञ्चे हीतस्ततः पुस्तकसमूहः प्रसृतोऽविद्यत । पृष्ठभागे वाग्व्यवहारोपयिकमेकं ध्वनियन्त्रं (टैलीफौन) तथा दार्शनिकविषयाणां, धार्मिकानां च पुस्तकानां काष्ठकोषो निहितोऽभूत् । विदेशीया विद्वांसस्त्वाश्चर्यमावहन् यद्धि स तु सरलसरलं सर्वजनसमान्यस्तरं न्यवसत् परं विचारप्रौढ्यां यदा ते (विदेशीयाः) स्वात्मानं जनात्तस्मात्सरलादपेक्षयातीव हीनमिवोपालक्ष्यँस्तदा तेषां शिरः श्रद्धावनतं समभूत् ।

राधाकृष्णमहाभागो जातुचित् क्रोधावेशवशं नापागच्छत् । प्रथमदर्शन एव हि तस्य कोमल-मधुर-मृदुल-स्वभावस्य परिचयो भवति स्म । स सर्वेषामेव कथनं शृणोति स्म, प्रश्नानामुत्तरं च सावहितं प्रयच्छति स्म । यदि वयमेतद्वदेम यत् सः स्वजीवने नैकमपि जनं स्वशत्रुं मेने, न च केनापि सह शत्रुताया व्यवहारं चक्रे, तदा नेयमतिशयोक्तिः स्यात् । इत्थं स खल्वजातशत्रुरासीत् । भारतदेशस्य राजधान्यां देहल्यां तस्य साक्षात्कारो मिलनं च सर्वतः सुलभमनायाससाध्यं च भवति स्म । तन्निवासस्थलं देहलीयात्रिणां तीर्थीभूतमिवासीत् । तद्भृत्याश्चैवमवदन्—'अस्माकं राष्ट्रपतिस्तु साधुर्महात्मा च वर्वर्त्ति, न स कदापि कस्मा अपि प्रकुपितः ।'

रूसदेशे भारतराष्ट्रस्य राजदूतरूपो राधाकृष्णमहोदयस्तस्थौ तदा तस्य सुमहानेव सम्मानः समभूत् । स्वर्गं गतो मार्शलस्तालिनमहाशयो वारद्वयं राधाकृष्णमहाभागेन सह साक्षात्कारं विदधे । स हि राधाकृष्णस्य विचारस्वातन्त्र्यस्य बह्वादरं कुरुते स्म । स किलैकदा श्रद्धाभावं समभिव्यञ्जयन् कथयामास—"द्राक्तरवर्यो राधाकृष्णो मानवतायाः कृते कष्टानि सहते तथा च सत्येन हृदयेन भाषते ।" अथ ब्रिटिशराष्ट्रस्य भूतपूर्वो मन्त्रिवर्यः श्रीचर्चिलमहोदयोऽपि चास्य श्लाघाशंसनं विना न तुतोष—"अहं हि प्राध्यापकं श्रीराधाकृष्णमहाशयं व्यक्तिगतरूपेण परिचिनोमि । स भावावेशबाह्यो नास्ते । यदा स मोलोतोवेन, स्तालिलेन च साक्षात्काराय सङ्गच्छते, तदा विश्वस्यास्य विभाजकानि कारणानि न कदापि विस्मरति । नाहं तदपेक्षयाधिकतरं श्रेष्ठमन्यं कमपि जनं जाने यो हि विश्वस्य कल्याणपक्षे सततं चिन्तयन् स्यात् ।" अथ च सेनापतिर्नजीबमहाशयो राधाकृष्णस्य व्यक्तित्वविषये प्रोक्तवान्—"द्राक्तरवर्यो राधाकृष्णमहाभागो महामानवोऽस्त्येकः । स किलोच्चादर्शानां शांतिप्रियो जनो वर्तते ।" राष्ट्रपिता महात्मा गान्धिः सन् १९४१ ई. वर्षे काशिहिन्दुविश्वविद्यालयस्य रजतजयन्तीमहोत्सवावसरे तस्यागाधगम्भीरामपारां च विद्वत्तां श्लाघमाण उन्मुक्तकण्ठमुवाच—"न हि सर्वे जना मालवीयसदृशा वा सरराधाकृष्णसमा वा भवितुमर्हन्ति ।"

मिश्रदेशस्य महादार्शनिकः प्लेटोनामा स्वकीये विश्वविख्याते "गणतन्त्रम्" इति ग्रन्थे लिलेख—"यावद्दार्शनिकाः शास्तारो न भवन्ति, यावच्च शासका दार्शनिका न भवन्ति, तावद् विश्वस्मिन् शाँतिः सुरक्षा च स्थापयितुं न शक्यते ।" यदि चाद्यत्वे प्लेटोमहाशयः संसारेऽस्मिञ्जीवन्नभविष्यद् यद्धि तस्य चिरस्वप्नानुसारमिदानीं यावद्घटिते

मात्राध्येता नार्थज्ञः । एवं तावदस्मिन् ज्ञानम्प्रशस्तम् ।

उत त्वं सख्येस्थिरपीतमाहुरिति । अपि बहून् विदुषः "सख्ये" सखिभावे कतरस्मिन् देवसख्ये समानाख्यानतायां देवसायुज्ये इत्यर्थः । वक्ष्यति हि-याँ याँ हि देवताँ निराह, तस्यास्तस्यास्ताद्भाव्यमनुभवति" इति । अथवा देवसख्ये रमणीये स्थाने, देवलोके इत्यर्थः । किम् ? इति स्थिरम् अविचालिनम् अप्रच्यवनधर्माणम् । कमेवमाहुः? विपीतार्थम्, आपीतार्थं गृहीतार्थमित्यर्थः । क एवमाह ? इत्येव वाक् ऋक्-संहिता । किञ्च नैनं हिन्वन्त्यपि वाजिनेषु । एनं वागर्थज्ञं न हिन्वन्ति नानुगन्तुं शक्नुवन्ति । केषु ? वाजिनेषु वाग्ज्ञेयेषु अर्थेषु बलवत्स्वपि दुर्ज्ञेयेषु दुरवघटनीयेषु समुद्रनिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्त्तव्येषु । स हि तान् व्याकर्तुम शक्नोति, नेतरे मन्दबुद्धयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान् व्याकर्त्तुम्, यान् असौ व्याकरोति । अत एतदुक्तम्—नैनं हिन्वन्त्यपि वाजिनेषु । अप्येवं तावदर्थज्ञः प्रशस्तः।

अथेदानीमविद्वानुत्तरेणार्द्धर्च्चेन निन्द्यते-अधेन्वा चरति । अधेन्वा ह्येष चरति न हि सा वाक् हिनोतीह न परत्र च यस्या अर्थो न परिज्ञायते । तया गृहीतयैव नामधीयान इतश्चेतश्चरति तत् प्रधान एव सर्वतः पर्य्यटतीत्यभिप्रायः । किञ्च माययैषः चरति गृहीतया यथा हि कश्चिन्मायया सुवर्णं विभृयात, एवमयं वाचमेव सताम्बिभर्ति । सा तादृशी भ्रियमाणा वाक् किं करोति ? तास्मै कामान् दुग्धे । कतमान् ? ये तस्याः वाचो दोग्धव्याः ; क्व ? "देवतास्थानेषु मनुष्यस्थानेषु च । यः किं करोति ? य एवं शुश्रवान् श्रुतवान् भवति । कथम् ? अफलामपुष्पामिति । एवं यः श्रुतवान् भवति, एभ्यः सकाशात् श्रुत्वा च दृढ़ग्राहेण गृहीत्वावस्थितो भवति, अध्ययनादृते नान्यदस्ति वाचि किञ्चित् मृग्यमिति । तस्मै किम् ? इति "अफलैवास्मा अपुष्पा च वाग् भवतीति । यथैव ह्यसौ पश्यति अफलेयमपुष्पा चेति तथैव भवतीत्यभिप्रायः । तथा च मनुनाऽप्युक्तम्—

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।"

तथा च पौराणिकैरुद्गीयते—

"योऽधीत्य विधिवद् विप्रो वेदार्थं न विचारयेत् ।
स च लोके शूद्रसमः पात्रतां न प्रपद्यते ।।
वेदस्याध्ययनं सर्वम् धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थम् तत्सर्वम् तुषाणां कण्डनं यथा ।।
पाठमात्ररतान्नित्यं द्विजातीयाँश्चार्थवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणाऽपि नार्चयेदिति

व्याकरणशास्त्रम् आयुर्वेद इव वाङ्मलानाँ चिकित्सकः, सर्वविद्यादृतः सर्वविद्यापवित्रः सन् मोक्षाख्यपरमपुरुषार्थप्राप्तये एकः सरलः पन्थाः । लोके सर्वाः विद्याः शब्दैर्निबद्धाः, अतः सर्वासाँ विद्यानां शक्तिग्राहकः सन् व्याकरणम् वेदज्ञानद्वारा मोक्षस्य द्वारम् वर्तते । किञ्चेदम् मोक्षङ्कामयमानानाङ्कृते सिद्धिसोपानपर्वणामाद्यम्पदस्थानम्, अकुटिलो राजमार्गश्च वर्तते, ततश्च ब्रह्मसाक्षात्कारो जायते । तथा चोक्तम् वाक्यपदीये ब्रह्मकाण्डे—

तद् द्वारमपवर्गस्य वाङ्मलानाँ चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यम्प्रकाशते ।।
यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्यानामेषा विद्या परायणम् ।।
इदमाद्यम्पदस्थानम् सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।
अत्रातीतविपर्यासः केवलामनुपश्यति ।
छन्दस्यश्छन्दसाँ योनिमात्मा छन्दोमयीं तनुम् ।।
प्रत्यस्मितभेदाया: यद्वाचो रूपमुत्तमम् ।
तदस्मिन्नेव तमसि ज्योतिः शुद्धम्प्रवर्तते ।।"

वाक्यपदीये ब्रह्मकाण्डे श्लोकः १४, १८।।

———०———

# अंगारों पर दहक रही है........

महावीर 'नीर' विद्यालंकार

अंगारों पर दहक रही है, चिता आज अरमानों की ।
मंझधारों में भटक रही है, किश्ती आज दीवानों की ।।
आज सूर्य को फिर से, देखो, तिमिर आँख दिखलाता है ।
जीवन के हर स्वर्णिम पथ पर, कौन धुंध छिटकाता है ।।
दीवारों पर लटक रही है, कथा आज बलिदानों की......
कहीं किसी की उमर बिक रही, चाँदी की टकसालों में ।
कहीं किसी की भूख बिक रही, गली मौहल्ले वालों में ।।
बाजारों में तड़प रही है, लाश आज कुछ दानों की......
नाच-रंग की लगी चौकड़ी, मस्त हुए पीने वाले ।
रिश्वत, चोर-बाजारी पनपी, बढ़े दुष्ट, धंधे-काले ।।
अखबारों में निकल रही है, कथा दुष्ट नादानों की......
दिशा-भ्रमित से भटक रहे हैं, लक्ष्य सुनिश्चित नहीं अपना ।
दयानन्द, गाँधी, गौतम का, दलित हो रहा सब सपना ।।
दरबारों में सिसक रही है, अर्थी उन परवानों की......
मांग किसी की भरने वाले, स्वयं माँग कर बैठे हैं ।
लाज किसी की ढकने वाले, स्वयं लाज खो बैठे हैं ।।
आचारों में झलक रही है, कुण्ठा अब इन्सानों की......
हर क्यारी में फूल खिले हैं, सब खेतों में पानी है ।
शस्य-श्यामला धरणी लेकिन, फिर भी क्यों कंगाली है ।।
अंधियारों में भटक रही है, दिशा आज निर्माणों की......
'नीर' आज बोझिल जीवन का, भार ढो रहा हर मानव ।
दुर्लभ है अमरत्व कथा अब, व्यथित घूमता हर मानव ।।
व्यवहारों में दीख रही है, व्यथा-कथा मस्तानों की......

—•—

# श्रद्धेयाचार्यवर्यस्मरणम्

येषां संस्मरणं सुशान्तिजनकं, सत्स्फूर्तिसन्दायकं
येषां दर्शनमेव नित्यमभवत्, क्लैव्यस्य विद्रावकम् ।
येषां संगतिरत्र कोटिमनुजान्, प्रारक्षयत् पापतः,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।१।।

येऽस्माकं जननीसमा हि पितरः, सच्छिक्षकाग्रेसराः,
नित्यं नो हितचिन्तकाः सुसुहृदः, सद्बान्धवाः सौख्यदाः ।
शिष्येभ्यो निखिलेभ्य एव सततं, सर्वस्वभूता हि ये,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।२।।

शिक्षायाः कुदशां विलोक्य भुवने, चारित्र्यसन्दूषणीं,
यैः संस्थापितमेव सद्गुरुकुलं, भागीरथी रोधसि ।
सोढं सर्वविधं हि कष्टमतुलं, भग्नं परं नो व्रतं,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।३।।

चारित्र्यस्य धनं शुभं ह्यनुपमं, तद्रक्षणीयं सदा,
सम्पाल्यं सकलैः सुशक्तिजनकं, सद्ब्रह्मचर्यव्रतम् ।
इत्थं लोकहितेच्छयाऽखिलजनान् योऽबोधयन् सर्वदा,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।४।।

देवस्यैव सुता यतोऽखिलजनाः, प्रीत्याऽवलोक्याः समे,
अस्पृश्यो न हि कोऽपि जातु भुवने, जात्या विभाव्यः क्वचित् ।
अस्पृश्यत्वनिवारणार्थमनिशं, यत्नं शुभं कुर्वतः,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।५।।

भक्ताः स्युः जगदीश्वरस्य सकलाः, सद्देशभक्ताः समे,
वृत्तिं त्यागमयीं विधाय विमलां, देवस्य सेवारताः ।
इत्थं यैर्भरिता स्वशिष्यनिवहे, सद्भावना निश्चला,
श्रद्धानन्दमहोदयान्, गुरुवरान् वन्देऽतिभक्त्या युतः ।।६।।

हा हन्तेह न तादृशा गुरुजनाः, अद्यावलोक्याः क्वचित्,
प्राणेभ्योऽप्यधिकं प्रियं गुरुकुलं, नादर्शरूपे स्थितम् ।
दद्याच्छवितमती शिवः प्रचलितुं, श्रद्धेयगुर्वध्वनि,
श्रद्धानन्दमहोदयान् गुरुवरान्, वन्देऽतिभक्त्या युतः ।।७।।

विनयावनतः–

धर्मदेवो विद्यामार्त्तण्डः (देवमुनिर्वानप्रस्थः), आनन्दकुटीरम्, ज्वालापुरम् ।

# आयुर्वेदोक्ताः केचन सिद्धयोगाः

विद्याभूषणः श्रीगणेशराम शर्मा

**ज्वरे न किञ्चित् परमं किरातात्,**
**तद्वन्न शुण्ठ्या ह्यतिसाररोगे ।**
**न तक्रतुल्यं ग्रहणीविकारे,**
**ह्यर्शोविकारे विजयापरं न ॥१॥**

अर्थात्–ज्वरोपशांतये किरातात् (चिरायता इति ख्यातात्) औषधात् परं किञ्चिदपि चौषधं नास्ति । अतिसाररोगे शुण्ठ्याः (सौंठ) परतरं किमप्यौषधं नास्ते । संग्रहणीति ख्याते विकारे तक्रसमानं किञ्चिदप्यन्यदौषधं नास्ति, एवमेव हि ह्यर्शोविकारे (बवासीर) विजयातोऽर्थाद्धरीतकीतः परमं किमप्यौषधं पृथिव्यां न विद्यते ॥१॥

**अजीर्णरोगे न हरीतकीत-**
**स्तद्वद्विषूच्यामथ निम्बुनीरम् ।**
**रसोनकं सालसके गदे हि,**
**विलम्बिकायामथ काञ्जिकं तु ॥२॥**

अजीर्णे हरीतकीतः श्रेष्ठमौषधं नान्यत् किमपि भवितुमर्हति । तथैव विषूच्यां (हैजा) निम्बुफलस्य रसाच्छ्रेष्ठतरं किञ्चिदपि नास्ति । सालसकाख्येऽजीर्णभेदविशेषे रोगे रसोनकं–लशुणं–श्रेष्ठमौषधम् । एवमेव विलम्बिकाख्येऽत्युग्रेऽजीर्णरोगे काञ्जिकं (कांजिया) सर्वोत्तममौषधं भवति ॥२॥

**जन्तुघ्नमन्यच्च तथैव जन्तु-**
**रोगेष्वथ चौषधं पाण्डुरोगे ।**
**गोमूत्रमेकं त्वथ कामलासु,**
**फलत्रयं मूलकशाकभाज्यम् ॥३॥**

सर्वेष्वपि कृमिरोगेषु जन्तुघ्नं–वायविडंग इति सर्वश्रेष्ठमौषधं वर्तते । पाण्डुरोगे खल्वेकमात्रं गोमूत्रमेव हि सर्वोत्तममौषधं भवति । कामलासंज्ञके रोगे त्रिफला तथा मूलकशाकमुत्तममौषधं प्रोक्तमास्ते ॥३॥

**हलीमके रेचनकं च तीव्रं,**
**वासा तथा लोहितपित्तरोगे ।**
**कासेषु सर्वेषु च कण्टकारी,**
**श्वासेषु भार्ङ्गी विदितप्रभावा ॥४॥**

हलीमकाख्ये पाण्डुरोगस्य प्रोग्रतरे रोगे तीव्रं हि विरेचनमुत्तमौषधं भवति । रक्तपित्ताख्ये रोगे वासा (अडूसी) वासा, सर्वविधेषु कासरोगेषु कण्टकारी (भोयरेंगणी) तथा च श्वाससम्बन्धिषु सर्वेषु रोगेषु भारंगमूलं सर्वोत्तममौषधं भवति ॥४॥

**नारीपयोनस्य विधानयोगो**
**हिक्काविनाशाय च रेचनं वा ।**
**उरोगदे चार्जुनसाधितं स्याद्**
**घृतं तथोरः क्षतजेषु मांसम् ॥५॥**

हिक्का (हिचकी) रोगोपशांतये स्त्रियाः स्तनदुग्धं नस्यरन्ध्रयोः पातितं महदुपकरोति किंवा रेचनमपि भवत्यौषधं लाभकरम् । हृदयरोगेऽर्जुनवृक्षस्य त्वचा साधितं घृतं नाम परमौषधं भवति तथा च उरसोऽन्तर्भागे जातानां क्षतानां शांतयेऽजामाँसं सद्यः प्रभावकरं स्यात् ॥५॥

**यक्ष्मामये छागपयोऽजमांसं,**
**छागं घृतं छागनिवासवासः ।**
**मूर्च्छासु शीताञ्जनसेकलेप-**
**सुपुष्पनीराणि च कीर्तितानि ॥६॥**

क्षयरोगेऽजाया दुग्धं, तन्मांसं, तद्घृतं तथाऽजानां निवासस्थाने ताभिः सह निवासोऽस्ति सर्वोत्तममौषधम् । मूर्च्छायां च शीतमञ्जनं, शीतलं जलं, शीतजलसेचनं, शीतलो लेपः, सुगन्धीनि पुष्पाणि तथा च शीतानि सुगन्धयुक्तानि जलानि चातीव लाभकराणि संसिद्ध्यन्ति ॥६॥

**दुरालभापयः शृतं घृतान्वितं सशर्करम् ।**
**श्रमे पिबेदसंशयं तथा गवां पयः स्मृतम् ॥७॥**

श्रमरोगे दुरालभाख्यस्य (धमासा) उष्णं दुग्धं, घृतेन-सहित शर्करायुक्तं च पेयमेवमेव गोदुग्धमपि पातव्यं तेन श्रमरोगः शाम्यति ॥७॥

**मांगल्यपुष्पीस्वरसं द्विटङ्कं,**
**छर्दिष्वलं मारिचचूर्णयुक्तम् ।**
**सुवर्णलोहैः सिकताभिरुष्णै-**
**र्निर्वापितं तर्षहरं जलं स्यात् ॥८॥**

वमनरोगे टङ्कद्वयप्रमाणः ( तोलाप्रायः ) मांगल्य-पुष्प्याः–शंखावल्याः स्वरसः प्रभावशाली भवति । तप्तेन सुवर्णेन, लोहेन, सिकताभिर्वा निर्वापितं जलं तृड्दाहमुप-शामयति ॥८॥

**सहस्रधा धौतघृतेन दाहो**
**विनाशमायाति विलेपनेन ।**
**उन्मादरोगे सुमनोधिवास-**
**सितां च कूष्माण्डकमाशु खादेत् ।९॥**

सहस्रवारं धौतेन घृतेन लेपकरणाद्दाहपीडा विनश्यति। उन्मादरोगे-चित्तविक्षेपे च सुमनोगन्धभाविताां सितां-शर्करां, ( गुलकन्द इति प्रसिद्धां ) भक्षयेद्वा कूष्माण्डं ( श्वेतं ) सेवेत ॥९॥

**सशर्करं हव्यमुशन्ति मद्य-**
**पानात्ययेऽत्युग्रमथाहिफेने ।**
**भङ्गाभवे चाम्लरसं विशेषा-**
**दुन्मत्तजे गोपयसा सितां च ॥१०॥**

अत्यन्त मद्यपानादुद्भूते रोगे-आयुर्वेदज्ञाः शर्करया सह घृतसेवनमिच्छन्ति तथा चाहिफेनसम्भवे भङ्गारससेवनोद्भवे रोगे विशेषतः शर्करया साकमम्लरससेवनं समर्थयन्ति। अर्कभक्षणेन जाते रोगे गोदुग्धेन सह शर्करासेवनमिच्छन्ति१०

**विषेऽशिते च्छर्दनमाशु कुर्या-**
**च्छिराविमोक्षं सविषैः प्रदष्टे ।**
**भृङ्गीविषे वृश्चिकमक्षिकादि-**
**विषे घृतं सैन्धवचूर्णतप्तम् ॥११॥**

यदि विषं भक्षितं भवेत्तदा वमनं कुर्यात् । सर्पादिभिः सविषैर्जन्तुभिर्दष्टे शिराविमोक्षणं कारयेत् । भृङ्गीमक्षि-कावृश्चिकादीनां दंशे सैन्धवलवणस्य चूर्णं घृते परिपच्य दंशविषप्रभाविते स्थाने लेपयेत् ॥११॥

**विमर्द्यमेतद्विषनाशनाय**
**तत्र प्रदेशे खलु यत्र दष्टम् ।**
**व्याघ्रादिहिंस्रैर्नखदन्तघाता-**
**ज्जाते विषे चित्रकनीरपानम् ॥१२॥**

व्याघ्रचित्रकभल्लूकश्रृगालश्वादीनां नखायुधानां श्वापदानां नखैर्दन्तैर्वा जाते विषे चित्रकनाम्न औषधस्य जलं निर्गाल्य पातव्यमथवा चित्रकस्य क्वाथं परिपच्य पीयताम् ॥१२॥

**अङ्कोलपत्राणि जलेन पेष्य**
**मारीचचूर्णेन समं पिबे :।**
**विषं निहत्याशु शुनः प्रमत्तता-**
**प्रजायमानस्य च दन्तजातम् ॥१३॥**

अङ्कोलाख्यस्यौषधस्य पत्राणि जलेन सम्पेष्य मरीचानां चूर्णेन साकं भक्षणाच्छुनो भक्षणादुद्भूतं विषं अलर्काख्यं प्रशममेति ॥१३॥

**निर्गुण्डिवन्दाकमपस्मृतिघ्न**
**संसेवनान्नस्यविधानयोगैः ।**
**वातेषु च योगराजपूरं**
**रसोनं तिलतैलमुष्णम् ॥१४॥**

निर्गुण्ड्या मूलस्य तथा वंदोनाम्नो वनस्पतेश्चूर्णं विधाय नस्यमिव नासारन्ध्राभ्यामासेवनाद् बातविकारः शाम्यति । योगराजगुग्गुलस्तथा च लशुनः सर्वेष्वपि च वातरोगेषु हितकरं भवति । उष्णद्रव्याणि सर्वाणि तथा तिलानां तैलं च वायुरोगे भक्षणान्मर्द्दनाच्च लाभः स्यात् ।१४

**कफोत्थरोगेष्वखिलेषु शुण्ठी**
**विरेचनं पित्तभवेषु तद्वत् ।**

**कुष्ठादिरोगेषु च निम्बजातं**
**पञ्चाङ्गमद्यान्मधुना तदर्कम् ॥१५॥**

कफजन्येषु सर्वेष्वपि रोगेषु शुण्ठी तावत्सर्वश्रेष्ठमौषधं भवति, तथैव पित्तोद्भवेषु सर्वेष्वामयेषु विरेचनं नाम सर्वोत्तममौषधं भवति। कुष्ठादिषु सर्वेषु चर्मरोगेषु निम्बस्य पञ्चाङ्गस्वरसो मधुनासह संसेव्यः ॥१५॥

**शोथेषु सर्वेषु च मत्स्यपित्त-**
**मद्यात्सुगोमुत्रयुतं मनुष्यः।**
**तथोदरेष्वाशु निषेवितव्यं**
**क्रमेलिकायाः पयसोऽनुपानैः ॥१६॥**

अथ सर्वेष्वपि च शोथेषु मनुष्येण गोमूत्रेण सह मत्स्य-पित्तं ( कट्वाख्यं ) भक्षयेत् तथैव सर्वेष्वप्युदररोगेषु कटु इत्यौषधसेवनात्तत्कालमुष्ट्रया दुग्धं पेयम् ॥१६॥

**फलत्रिकं त्र्यूषणसैन्धवाभ्यां**
**करञ्जबीजेन सरामठेन।**
**गन्धर्वहस्तोत्थजटाकषायं**
**पेयं हि शूलेषु च निर्विशङ्कम् ॥१७॥**

शूलपीडायां त्र्यूषणेन—मरीच-शुण्ठी-पिप्पलीति—सैन्धवं रामठं (हींग) एतैः सहितं त्रिफलायाश्चूर्णं करञ्जबीजैः सह निषेवणीयम् तदुपरि एरण्डमूलस्य क्वाथो निःशङ्कं पेयः। एवं कृते शूलपीडाऽपसरति ॥१७॥

**गुडूचिकायाः स्वरसः प्रमेह-**
**रोगेषु पेयो मधुना समेतः।**
**तद्वन्महानिम्बफलस्य मज्जा**
**फलत्रिकं माक्षिकसंयुतं वा ॥१८॥**

प्रमेहरोगेषु सर्वेष्वर्थान्मूत्रकृच्छ्रेषु गुडूचिकायाः (गिलोयेतिख्याताया:) स्वरसः पातव्यस्तथैव महानिम्बस्य ( बकायननीम ) बीजानां मज्जा ( मेजं ) किंवा त्रिफला मधुना सह संसेवनीया ॥१८॥

**दिङ्मूलमाशु त्रिफलासमेतं**
**तृणप्रभूतं वरुणत्वचा च।**

**सितासमेतं क्वथितं निषेव्यं**
**मूत्रादिकृच्छ्रेष्वखिलेषु नित्यम् ॥१९॥**

सर्वविधेषु मूत्रकृच्छ्रेषु त्रिफलया सह पञ्चतृणानि—दर्भः, कासः, इक्षुः, सरः, शालश्चेति—तथा च दशमूलक्वाथ-स्तानीमानि वरुणवृक्षस्यान्तस्त्वचा सह क्वथितानि कृत्वा शर्करामिश्रितानि विधाय सद्य एव हि नित्यं पिबेत् ॥१९॥

**गुडूचिकायाः स्वरसः प्रमेह-**
**रोगेषु पेयो मधुना समेतः।**
**तद्वन्महानिम्बफलस्य मज्जा**
**फलत्रिकं माक्षिकसंयुतं वा ॥२०॥**

मूत्ररोगेषु मधुना साकं गुडूचिकायाः स्वरसं पिबेत्। तथैव मूत्रकृच्छ्रेषु महानिम्बस्य ( बकायननीम ) फलानां बीजानि मधुना सह खादेदथवा त्रिफलां लिह्यात् ॥२०॥

**भल्लातकासीसहुताशसूर्य-**
**दुग्धप्रलेपादथ गण्डमाला।**
**विनाशमायाति पुरेण सार्धं**
**क्वाथं पिबेत् काञ्चनशत्रुत्वग्जम् ॥२१**

भिल्लातकं, सीसकं, ( हीराकसी ) चित्रकं तथा च अर्कदुग्धमित्येतेषां सर्वेषां प्रगाढलेपेन गण्डमाला (कंठमाला) प्रशम व्रजति। तथैव काञ्चनारस्य त्वचां क्वाथं गुग्गुलेन सह पिबेत्तदापि कण्ठमाला प्रशाम्यति ॥२१॥

**स्फोटेषु सर्वेषु च पुत्रजीवा-**
**बीजोऽथमज्जा तु जलेन लेप्या।**
**भगन्दरादि व्रणनाशहेतोः**
**फलत्रिकक्वाथमलं पुरेण ॥२२॥**

साधारणेषु सर्वेषु व्रणेषु जीवापोतस्य गुटिकायास्तथा च तद्बीजानां जलेन सह लेपो विधेयः। भगंदरादिषु व्रणेषु त्रिफलायाः क्वाथो गुग्गुलेन सह तदुपशांतयेऽलं भवति ।२२

**अपादिकानाशकरं घृतं च**
**समन्त्यथं सैन्धवदेवधूपैः।**
**मधुप्रकर्षाद् व्रणलेपनात्तु**
**सपूरणाच्चापि व्रणघ्नमाशु ॥२३॥**

सैन्धवलवणेन सह रालद्रव्येण मन्मथेन (मोरा) सह गोघृतस्य लेपेन अपादिकारोग: (बाई) शाम्यति । मधुनो विशेषमात्रां प्रक्षिप्य लेपेनापादिका शीघ्रतर विनश्यति ।२३

**यवानिकयुग्मयुताजमोदा**
**फलत्रिकं पारदगन्धकैला: ।**
**गुडं पुराणं च समं दिनैकं**
**प्रकुटच कुर्याद् वटिकां मनुष्य: ।।२४।।**
**माषद्वयैकां नवनीतगर्भे**
**कृत्वा गिलेत्तां तु जलानुपानै: ।**
**रूक्षान्नमष्णल्लवणं विहाय**
**जयेत् फिरङ्गाख्यगदं जवेन ।।२५।।**

खुरासानदेशोद्भवोऽजमोदो बोडीत्याख्योऽजमोदश्च त्रिफला, पारदो, गन्धक, एला तथा च पुराणो गुड इत्येतानि सर्वाणि प्रकुट्य माषधान्यस्य कणद्वयप्रमाणा गुटिका साध्या, तां च गुटिकां नवनीतेनावृत्य जलेन सह गिलेत् । अस्याश्चिकित्साया: समये लवणं परित्यज्य रूक्षमन्नं भक्षयेत् । एवं कृते फिरङ्गनामा रोगो विनश्यति ।२४।२५।

**ईशाश्मतुत्थविजयायमनै: समानै-**
**र्धूप: सपत्रबदराग्निसमुत्थितस्तु ।**
**लिङ्गक्षतेषु नियतं परिसेव्यमानो**
**दूरीकरोति सहसा सहसोपदशान् ।२६**

पारदो, मनःशीलं (मेणसल) हरीतकी, तुत्थं (मोर-यूथा) तथा च यमनं सर्वाणीमानि समभागे गृहीत्वा बदरीवृक्षस्य पत्रैरुद्दीपितेऽग्नौ प्रक्षिप्य नियमेन जननेन्द्रिये जातेषु व्रणेषु धूपग्रहणाद् व्रणा: शीघ्रमेव विनश्यन्ति ।।२६

**तुत्थं सतिक्तं परिमृद्य खल्वे**
**नीरैश्च निम्बुप्रभवैर्दिनैकम् ।**
**भुक्त्वा वटीं माषमितां च तस्य**
**हन्यात् फिरङ्गाख्यगदं विशेषात् ।।२७।।**

निम्बुफलस्य रसेन सह मरीचान् तुत्थं च खल्वे दिन-मेकं परिमर्द्य नागवल्लीदलानां रसेन माषकणप्रमाणां गुटिकां संसाधयेत् । तां च गुटिकां गिलेत् । तथा कृते फिरङ्गनामा रोगो विनश्यति ।।२७।।

**कर्पूरमेलामरिचानि जाती-**
**पत्राणिपुष्पाणि दिवौकसां च ।**
**खल्वे विमर्द्याथ सुनागवल्ली-**
**दलोत्थनीरैर्गुटिका: प्रकुर्यात् ।।२८।।**
**कर्कन्धुमात्रा नवनीतगर्भे**
**कृत्वा गिलेत्तासु पुमानथैकाम् ।**
**दुग्धौदनं पथ्यमलं प्रकुर्या-**
**दस्तूपदंशं विनिहन्ति शीघ्रम् ।।२९।।**

कर्पूरं, एला:, मरीचानि, जातीपुष्पाणां ( चमेली ) पत्राणि तथा देवपुष्पाणि (लवङ्ग) एतानि सर्वाणि खल्वे परिमर्द्य नागवल्लीपत्राणां रसेन साकं गुटिकां बदरीफल-प्रमाणां विरचयेत् । तां च गुटिकां यो नवनीतेनावृत्य भक्षयति दुग्धौदन ( दूध और भात ) च खादति तस्य जननेन्द्रियस्य व्रण: (उपदंश) शीघ्रमेव प्रशाम्यति ।२८।२९

**सुनागफेनशाणपत्रहिङ्गुलार्कमूलकै:**
**सुबोधिनीत्वचा समं भुजङ्गवल्लिपत्रजै: ।**
**रसैर्विधाय चक्रिकां विशोष्य धूमपानगां**
**पिबेन्मुखेन धूममाशु चोपदंशनाशनम् ।।३०।।**

अहिफेन:, शाणपत्राणि ( सनइत्याख्यस्य ) हिंगुल:, अर्कवृक्षस्य मूलानि तथा च सुबोधिन्यास्त्वच: समभागे गृहीत्वा नागवल्लीपत्राणां रसेन चक्रिकां ( टिकड़ी ) विधाय शुष्कां च कृत्वा धूमपानविधिना (चिलम पर रखकर) मुखेन तस्या धूमपानादुपदंशस्य नाशो भवति ।३०

**अशन-लेपन-नस्यविधानतो**
**घृतमलं विमलं च शिरोगदे ।**
**त्रिफलया मधुना निशि भक्षितं**
**विजयते जयतेऽक्षगदं बलात् ।।३१।।**

शिरोरोगे स्वच्छं घृतं भक्षणीयम् । निर्मलस्य घृतस्य लेप: कर्त्तव्यस्तथा स्वच्छघृतस्य नस्यं सेव्यम् । रात्रौ त्रिफ-लया मधुना च सह घृतस्यावलेहनान्नेत्ररोगा: सद्य: प्रशा-म्यन्ति ।।३१।।

**अपि च निम्बजबीजजतैलकं**
**यदि च घ्राणगतं खलु नस्यवत् ।**

**अखिलपीनसनाशकरं क्षणा-**
**न्निगदितं विदितं खलु पण्डितैः ॥३२॥**

निम्बस्य बीजानां तैल यदि नस्यवन्नासापुटाभ्यां सेव्येत, तदा तत् क्षणादेव पीनसरोगं (प्रतिश्यायं) विनाशयतीति प्रोक्तं जानते पण्डिताः ॥३२॥

**मुखगदेष्वखिलेष्वहिवल्लरी-**
**दलजवीटिकया क्रमुकादिकम् ।**
**अशितमाशु गलग्रहनाशने**
**विजयते पटुनार्द्रकभक्षणम् ॥३३॥**

सर्वविधेष्वपि मुखरोगेषु नागवल्या वीटिकया साकं पूगीफलादिसेवनं सद्यो लाभं कुरुते । लवणेन सहार्द्रकभक्षणाद् गलस्य रोगा नश्यन्ति ॥३३॥

**उरसि चेद् गदपीडनमर्जुन-**
**प्रभववल्कलकल्कसुसाधितम् ।**
**घृतमलं भुजरोगहरीबला**
**समशिता क्वथिता गदिता ध्रुवम् ।३४**

हृदये यदि रोगो वा पीडा वा भवेत्तदाऽर्जुनवृक्षस्य त्वग्भिः साधितेनावलेहेन संसिद्धं घृतं तदुपशमायालं भवति । शर्करया साकं बलाख्यस्य ( बलदाणा ) औषधस्य क्वाथो हस्तरोगं--बाहुशोथादिकं--शामयति ॥३४॥

**जठरकुक्षिगदांश्च हरीतकी**
**विजयते लवणैश्च सरामठा ।**
**अपि च जानुगदेष्वखिलेष्वलं**
**हिततमं च रुबूकनिषेवणाम् ॥३५॥**

लवणेन, रामठेन ( हींग ) च सह संसेविता हरीतकी सर्वानुदररोगान् कुक्षिरोगांश्च शमयति । पुनः सर्वेष्वपि च जानुरोगेषु एरण्डबीजानां तैलं सेवितं सर्वश्रेष्ठं हितकरमौषधं भवति ॥३५॥

**पादप्रसुप्तेऽपि च वातरक्ते**
**शिराविमोक्षं प्रवदन्ति सद्यः ।**
**वैद्याः कषायं च गुडूचिकाया**
**रुबूकतैलेन समं हि पेयम् ॥३६॥**

पादे प्रसुप्ते तथा च वातरक्ते वैद्यास्तत्कालं शिर-विमोक्षणं तथा चैरण्डबीजतैलेन गुडूचिकायाः क्वाथः पेय इति वदन्ति ॥३६॥

**स्त्रीरोगनाशाय कटङ्कटेरी-**
**भूनम्बभल्लातलतिकाम्बुदानाम् ।**
**कषायकं वै रसजेन सद्यो**
**वासायुतानां प्रदरेषु पेयम् ॥३७॥**

स्त्रीरोगाणां (प्रदरादीनां) विनाशाय रसवन्त्या साकं, अडूसी-दारुहरिद्रा-किरात-भिल्लातक- तिल - नागरमोथानां क्वाथः पेयो भवति ॥३७॥

**भूधात्रीस्वरसं सितायुतमलं**
**स्त्रीरोगनाशं क्षमं,**
**शृङ्गीमागधिकां विषांबुदभवं**
**चूर्णं तथा माक्षिकैः ।**
**बालानां कसने तथा श्वसनके**
**वान्तौज्वरे सर्वदा,**
**सेव्यं वा गजकेसरं च सघृतं**
**स्त्रीभिः परं गर्भदम् ॥३८॥**

शर्करया सह भूतधात्र्याः ( भोयरींगणीत्यस्याः ) स्वरसः स्त्रीणां प्रमुखरोगाणामुपशमाय सक्षमो भवति । बालकानां कासे, श्वासे, वमने, ज्वरे च शृंगी ( काकड़ाशींगी ) पिप्पली, अतिविषस्य कलिका तथा च नागकेशर इत्येतेषां चतुर्णां चूर्णं नित्यं मधुना सह सेव्यम् । घृतेन सह नागकेशरस्यावलेहनात् स्त्रीणां गर्भस्थितिर्भवति ॥३८॥

**जवानिकाचित्रकटुत्रयाणां**
**सहिङ्गुसौवर्चलसैन्धवानाम् ।**
**चूर्णैः षडंशैश्च रसोनकल्क-**
**स्तैलेन वातानशनान्निहन्ति ॥३९॥**

हिंगु-संचल-अजमोद-चित्रक-मरीच-शुण्ठ-पिप्पल इत्येतेषां षड्भागास्तथा लशुणस्यावलेहस्तैरेतैः पूर्वोक्तैर्द्रव्यैः सह तैले विपच्य सेवनाद् वायुरोगाः शम्यन्ति ॥३९॥

रास्नानागरमेघवत्सकशठीतिक्तामृतावर्मभिः
पीयूषामरदारुनागचपला भूनिम्बवासेन्द्रजैः ।
क्वाथो यस्तु पटोलयासकयुत-
मध्वन्वितः साधितः,
पीतश्चाशु निहन्ति रोगनिकरं
यत्सन्निपातोद्भवम् ।।४०।।

पटोल-धमासाभ्यां सह रास्ना-शुण्ठी-नागरमोथा-कड़ात्वक्-कचूर-कटु-हरीतकी-पित्तपापडो-गुडूचं -देवदारु-गजपिप्पल-किरात-अडुसी-इन्द्रजव इत्येतेषां क्वाथः शीतलतां गतो मधुना साकं पीतः सन् सन्निपातोत्पन्नान् रोगान् सद्यः समूलं नाशयति ।।४०।।

अलाबुकूष्माण्डजबीजमज्जा
मज्जा तथा त्रापुसबोजजाता ।
तथाब्जबीजप्रभवा त्रुटिश्च
लोध्रेन्दुना वै स्थलकञ्जपुष्पैः । ४१।।

वटप्ररोहामलचन्दनैला
मुक्ताफलं वंशजविद्रुमे च ।
उशीरमात्मीयसुरोचनाढ्यं
शृङ्गाटकं यामनदेशजातम् ।।४२।।

कबाचिनीकेसरकोलमज्जा
मूलं च कासस्य च कासबीजैः ।
कुस्तुम्बरीदाडिमबीजनैरै-
मंथैस्तथा वा बहुबीजजातैः ।।४३।।

आलोड्य संपेष्य समानमस्य
कर्षप्रमाणा मधुकोत्थसत्वैः ।
उद्धूल्य चोद्धूल्य सुचक्रिकास्तु
कार्यास्तु तासामपि चैव नीरे ।।४४।।

वसु प्रमाणे निशि चोषितैकां
प्रातः पिबेत्तां सितया समेताम् ।
रुग्दाहनाशाय मधुप्रयुक्तां
मनोगदे लोहितपित्तरोगे ।।४५।।

पित्तप्रभूताखिलरोगहर्ता
हिमस्तदा सेव्यतमो मनुष्यैः ।
सद्धर्मकर्माणि शिवार्चनानि
निषेवितव्यानि हरेश्च नाम ।।४६।।

अथात्र रक्तपित्तसम्भवरोगाणामुपशांतये काचिद् वटिका तथा तया साधितं हिमजलं चोच्यते--

लोध्रः, कर्पूरं, स्थलकमलं, पाटला, कूष्माण्डबीजानामन्तस्तत्त्वं, कमलफलानामन्तःसारः, एलाः, वटस्याङ्कुराः, आमलकीफलानि, स्थूला एलाः, सुखड, मौक्तिकम्, वंशलोचनम्, परवालः, वालः, गोरोचनम्, यवनदेशोद्भवानि शृंगाटकानि ( अफगानी सिंघाड़े ) कबाचिनी, केशरः, बदरीफलानां बीजानि, दर्भबीजैः सह दर्भमूलानि एतान्यौषधानि कुस्तूम्बर्याः (धनिया) तथा दाडिमस्य कलिकानां बाहुज ( चीमड़ा ) मंथे समालोड्य सर्वाणीमानि सम्पेष्य तत्समानताम्बूलमूलस्य चूर्णेनावृत्य तोलाप्रमाणा गुटिकाः संसाध्याः । तामेकां गुटिकामष्टगुणे जले रात्रौ जले स्थापयेत् । तज्जलं प्रातः शर्करया साकं पिबेत् । तथा कृते पीडा ज्वलनं च प्रशाम्यतः । मनोरोगे तथा च रक्तपित्ते तस्या वटिकाया मधुना सहोपयोगः कर्त्तव्यः । समस्तपित्तप्रधानरोगशामकं तद्वटिकाजलं ( हिमजलं ) मनुष्यैः पातव्यम् । तथैव श्रेष्ठानि धर्मकृत्यानि कर्त्तव्यानि भगवन्नामानि च स्मर्तव्यानीति शम ।।४१ से ४६।।

---

१ 'अखण्ड-आनन्द' इति गुर्जरभाषाया मासपत्रस्य सन् १९७४ वर्षस्य ऑक्टोबरमासस्य दीपोत्सवाङ्कात्साभारम् ।

# अश्वघोषस्य प्रतिभानम्

श्री निगम शर्मा

कलं प्रणेदुर्मृगपक्षिणश्च
शातम्बुवाहाः सरितो बभूवुः ।
दिशः प्रसेदुर्विमले निरभ्रे
विहायसे दुन्दुभयो विनेदुः
१.२६ ॥

कीदृशं मनस औज्ज्वल्यं, चेतनायाः प्रसन्नता, श्रद्धोन्नताया विवेकबुद्धेः समाधिः । स एव राजा शून्यशून्यमिव जगद् विलोपन् स्वकीयं तुरङ्गमं पृच्छति--

प्रचक्ष्व मे भद्र तदाश्रयाजिरं
हृतस्त्वया यत्र स ये जलाञ्जलिः ।
इमे परीप्सन्ति हि तं पिपासवो
ममासवः प्रेतगतिं पिपासवः
ब्र.च.८.८० ॥

अन्यत्र च सौन्दरानन्दे नन्दो नन्दनचारिणीं देवतामिव हृदयानन्दजननीं नन्दयन् प्रश्वासवायुना दर्पणं मलीयसं विधाय कोपभृकुटिं द्रष्टुमक्षमो मूर्ध्ना प्रियायाश्चरणयो ननाम ।

सा तं स्तनोद्वर्तितहारयष्टि-
रुत्थापयामास निपीड्य दोर्भ्याम् ।
कथं कृतोऽसीति जहास चोच्चै-
र्मुखेन साचीकृतकुण्डलेन ॥
४.१९ ।

य एव कविरित्थं तरुणयोरन्तर्गतं भावमभिव्यनक्ति । स एव जराजर्जरं कलेवरमित्थं वर्णयति, येन प्रतीयते रूपधारिणी जरैव स्थिता ऽस्मान् प्रतीक्षते--

छन्दको राजकुमारमुत्तरेणानुगृह्णाति--

पीतं ह्यनेनापि पयः शिशुत्वे,
कालेन भूयः परिसृप्रमुर्व्याम् ।
क्रमेण भूत्वा युवा वपुष्मान्,
क्रमेण तेनैव जरामुपेतः ॥
ब्र.च.३.३१

रूपस्य हन्त्री व्यसनं बलस्य,
शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनाँ रिपुरिन्द्रियाणा-
मेषा जरा नाम ययैष भग्नः ॥
३.३० ।

यथा स्तनयित्नुघोषमाकर्ण्य तरुणोऽपि गोवत्सो भीत भीत इव कम्पते, तथा राजकुमार उद्विग्नचेताः समजनि । अस्यामेव चिन्तायां निलीनमानसः स्फोटस्योपरि पिटिकामिवापरां रोगपीडां पश्यति । कथयति च--

निवर्त्यतां सूत बहिः प्रयाणा
न्नरेन्द्रसद्मैव रथः प्रयातु ।
श्रुत्वा च ये रोगभयं रतिभ्यः,
प्रत्याहतं संकुचतीव चेतः ॥
ब्र.च. ३.४७

इत्थं यदेव कविना गृहीतं तत्सर्वं प्रकृतिपरिपोषाय एव । वाग्देवतावतारेण भम्मटेन यदेतदुट्टंकितम्--'अवलंकृती पुनः क्वापि' तस्य सुन्दरं योजनं समन्वयं च वयं कवेरश्वघोषस्य कृतौ पश्यामः । नात्रालंकाराश्चमत्कृतिहेतवोऽन्यकविवद् दरीदृश्यते ।

कालिदासो यादृशीं कविप्रतिभोद्भिन्नां नवां सुगन्धिदायिनीं वल्लरीमिव रसस्फीतां ग्रणोद्भूताद्भुतां साधितवेशां सचमत्कारां नगरवधूमिव शिक्षितविनयां विलसदलंकारां कविरचनां कृतवान् । न तादृशीं शोभाव्यञ्जनामश्वघोषस्य कृतौ वयं पश्यामः । तथापि अश्वघोषस्य कविता भ्रूविक्षेपपरिचयरहिता सहजोन्मेषदायिनी ग्रामकृषकवधूरिव नितरां प्रमोददायिनी ।

अश्वघोषस्य शैली नितराँ सरला प्रसादात्मिका च । माधुर्यगुणानुरूपं वाक्यानां विनियोजनं येन चित्तं तत्कालमेव आर्द्रतां प्रयाति । कथोपकथनप्रसंगतः कविः प्रकरणस्य प्रभावातिशयं पुष्णाति । असित-महाराजयोः, गौतमच्छन्दकयोः, गौतमपुरोहितयोः, पितृपुत्रयोः अराडगौतमयोः, नन्दगौतमयोः, सुन्दरीनन्दयोश्च कथोपकथनानि द्रष्टुं योग्यानि । यत्र रतेः स्वभावस्य स्नेहस्य मानस्य यथार्थस्य शृंगारस्य च भावाः स्वत एवोल्लसन्ति ।

बाह्यसौन्दर्यसाधनरूपं कवेर्नासीन्मनस्यलंकार-निरूपणवर्णनम् । तथापि उपमा-रूपकप्रभृतयः कतिचन एवालङ्कारा यथावसरं कविना प्रतिपाद्यस्य उत्तेजनार्थं स्पृष्टाः, उत्थापिताश्च । पिपासुं व्याघ्रं वर्णयन् कविराह-

व्याघ्रः क्लमव्यायत खेलगामी,
लाङ्गूलचक्रेण कृतापसव्यः ।
बभौ गिरेः प्रस्रवणं पिपासु
र्दित्सन्पितृभ्योऽम्भ इवावतीर्णः ।।
सौ. १०.१० ।

तस्मिंश्च हिमवति किन्नर्यः वर्ण्यन्ते—

दरीचरीणामतिसुन्दरीणां,
मनोहरश्रोणिकुचोदरीणाम् ।
वृन्दानि रेजुर्दिशि किन्नरीणां
पुष्पोत्कचानामिव वल्लरीणाम् ।।
सौ. १०.१३ ।

कीदृशी शब्दानामत्र योजना, अनुप्रासस्यच्छटा, उपमायाश्च सौन्दर्यं नैपुण्यमावहति । बालप्रियत्वं क्वचिच्चमरः प्रदर्शयति—

चलत्कदम्बे हिमवन्नितम्बे
तरौ प्रलम्बे चमरो ललम्बे ।
छेत्तुं विलग्नं न शशाक बालं
कुलोद्गतां प्रीतिमिवार्यवृत्तः ।।
सौ.१०.११ ।

इत्थमश्वघोषः प्रकृत्या प्रकर्षतया कविहृदयतां परिपाति, परं शान्तात्मना बुद्धेनास्य चित्तं तथा प्रभावितं चाभिभूतं चास्ति येनायं काव्यन्यायं प्रति न न्यायमाचरति । अश्वघोषेण स्त्रीपात्राणि नितान्तं विलासजननान्येव चित्रितानि । कालिदासस्य भासस्य वा स्त्रीपात्रं गृहिणी, सचिवः, सखा, प्रियशिष्या इत्यादिकं गुणैरनर्घमस्ति, परमश्वघोषेण स्त्री कामुकी, विलासवती, मोहजननी, जन-नीराग-हेतुः, कामस्य अस्त्रम्, इत्येवमादिभीरूपैरनुचित्रिता । प्रतीयते प्रकरणविवरणात् प्रतिपाद्यस्य वा विशेषात् । तथापि केनचिदन्येनोपायेन रक्ष्या स्यात् कवीनां भारतीया परम्परा काव्यगुणेन । अन्यथा कविर्वाच्योभवति सताम् । यथाऽत्रैव स्वमतां सुदतीं प्रियां रुदतीं परित्यज्य गतस्य नन्दस्य तां प्रति सर्वथैवोपेक्षा नोचिता । औचित्यनिर्वाहः कोऽपि कवेः कमनीयः प्रयासः । योभगवान् बुद्धो नारीणामुद्धारार्थं वेश्यालयं प्रत्यपि गच्छति, तत्र का हानिरासीद् भ्रातुरालयं प्रति गमने, तस्य प्रेषणे वा; अन्येन वा भिक्षुणा धर्मदेशनादाने ।

एतदनौचित्यं सहृदयानां चेतसि उद्वेगं जनयति । अन्यच्च कविरश्वघोषः स्वकीयं करुणावतारं बुद्धं सर्वतः श्लाघ्यं मनुते । मनुतां वयमपि स्वीकुर्मः । परं यदा बुद्धो भगवन्तं संस्कृतेरुत्कर्षदायिनं महात्मानं रामं निन्दति, यं वयं मर्यादापुरुषोत्तमं मन्यामहे, तत्रापि बुद्धकृता निन्दा पीडयति भारतीयानां नो हृदयानि । बुद्धः कथयति—

गृहप्रवेशं प्रति यच्च मे भवा-
नुवाच रामप्रभृतीन् निदर्शनम् ।

न ते प्रमाणं न हि धर्मनिश्चयं-
ष्वलं प्रमाणाय परिक्षतव्रताः ।।
बु. च. ९.७७ ।

अद्यावधि श्रीरामचन्द्रं न कश्चन साहसं चकार वक्तुं यदयं 'परिक्षतव्रतोऽस्ति ।' येन पितरं सत्यवादिनं कर्त्तुं कालकान्तारगह्वरं गृहमिवासादितम्, घोरैः राक्षसैः सह येन पुरुषपौरुषपरीक्षा प्रादायि, लोकरंजनार्थं येन प्राणेभ्योऽपि गरीयसी सीता कानने परित्यक्ता, यस्य जीवनं ऋषिभिस्तुल्यं विस्मयकरमानन्दजननं चासीत्, तं प्रति अयं प्रतिभादरिद्रो व्रतपरिक्षतमाह, सर्वथैवानुचितमेतत् ।

एवमेव शिष्टानुमतं ऋषिभिर्निषेवितं शास्त्रमर्यादानुसाधितं संस्कृतिपरम्परामार्गमपि कविरयं दूनाति । प्राचीनानां बृहस्पति-विश्वामित्र-अम्बरीष-जनक-प्रभृतीनां निन्दोद्घोषेणैव बुद्धस्य गौरवं जागर्ति, इति कवेर्विचारो न प्रमाणकोटिमवतरति । यद्यपि बुद्धस्य समग्रं दर्शनजालं सांख्यस्यैव एकां धारां परिपुष्णाति तथापि तेन नात्र निन्दा प्रयोक्तव्या ।

यद्यपीत्थं यत्र तत्र बहुत्र सन्ति वादजननानि कवेरश्वघोषस्य वचनानि तथापि शान्तरसस्य परिपुष्टिविषये यथाशक्ति कविना भूयान् प्रयासः कृतोऽस्ति । बुद्धेनाक्रान्तहृदयत्वाच्च महती निष्ठा तस्मिन् व्यधायि कविना । अत एव काव्यमस्य रुचिकरं स्वाध्याययोग्यं च । यदि कवि र्निर्दिष्टेषु स्थलेष्वपि यत्नवानभविष्यच्चेत्तर्हि नूनमेवास्य काव्यद्वयं अन्यकविकाव्यवत् प्रभूतां प्रतिष्ठामगाहिष्यत ।

कवौ तु महती कल्पनाशक्तिरासीत् । यथा स्थाने स्थाने उदाहरणेषु प्रतीयते, परं प्रचारगुणैराक्रान्तत्वात् सम्प्रदायवृत्तित्वाच्च तत्प्रतिभानं भस्माच्छन्नाङ्गारवत् निर्जीवमिव वञ्चितमिव समजनि । यै गुणैः कविः कालिदासः कविकुलगुरुतामलञ्चकार, तानेव गुणांस्तिरस्कृत्य अयं कविः प्रचारकमात्रपदमलंकरोति । अन्यच्च--गौतमबुद्धः स्वजनकस्य राजधान्यां सम्यक्पूजासत्कारैराद्रितो भवति--नन्दस्तथा भ्रातरं तथागतं पश्यति--

अथ स पथि ददर्श मुक्तमानं
पितृनगरेऽपि तथा- गताभिमानम् ।
दशबलमभितो विलम्बमानं
ध्वजमनुयान इवैन्द्रमर्च्यमानम् ।।
सौ. ४.४६

पश्यन्तु कवेरत्र प्रौढिम् । पितृनगरस्य प्रयोगः कीदृशः साधीयान् प्रतीयते ? यमनगरमेव कथं न स्पष्टं निरवोचत् कविः ?

शब्दानां प्रयोगकौशले धातूनां च प्रयोगे तत्र च प्रावीण्यप्रदर्शने लब्धं साहित्यमेव सुन्दरमजिरमस्मै--

यत्र स्म मीयते ब्रह्म कैश्चित् कैश्चिन्न मीयते ।
काले निमीयते सोमो न चाकाले प्रमीयते ।।
सौ. १.१५ ।

कीदृशी वचश्छटा व्याकरणपुङ्गवस्य । अरे कवे ! साहित्ये सुकुमारवस्तुनि न श्लाघायोग्यान्येवं विधानि बुद्धि-व्यायामपराणि पदानि । अपि च-चङ् प्रयोगाः सम्यक् परिचितास्ते--

यत्र विप्रानजीजयन् (१.४४), अर्हतोऽतिष्ठिपन् (१-४६), यशोधामान्यचीकरन् (१.४९) दिक्षु सर्वास्वचीखनन् (१.५०), नाधर्मिष्ठमतिष्ठिपत् (२.३८), न संरागादवीवृधत् (२.३८), एवमेव लिट्प्रयोगाः--

यः ससज्जे न कायेषु श्रीप्राप्तौ न विसिस्मिये ।
नावमेने परानृध्या परेभ्यो नापि विव्यथे ॥
सौ. २.२ ।

एवं प्रयोगाः कवेः सहृदयतामपहरन्ति । सहैव च, वयं काव्यशोभाकरान् धर्मान् सादरं रक्षामः, शिष्टाचारानुरोधेन च वयं शीलस्य शालीनतायाः श्रियः श्रृंङ्गारस्य परम्परायाश्च प्रौढि रक्षामः । कालिदासः खलु शृङ्गारस्य महान् रससिद्धः कविः, तत्र इयत्सौन्दर्यमियती कला, तथा च वैभवं प्रकाशते यद्वयं तृप्ता इव प्रसन्ना इव अनुमता इव रतेः पारं यामः, परं नात्र क्वापि पदमपि तथाविधं प्रयुक्तं वर्तते यत्र कोऽपि तर्जनीनिर्देशं कुर्य्यात् । परमयं तु भिक्षुः सुन्दरीसौन्दर्यवर्णने तस्याः प्रागल्भ्यं चाविष्करणे गृहस्थानपि पदद्वयं पश्चादनुवर्ति नश्चकार--

भगवन्तं भ्रातरं प्रति नमस्कर्तुं नन्दो गच्छति, तत्प्रिया सम्यग् जानाति ज्येष्ठं भ्रातरं प्रति प्रियो गच्छतीति, आगमिष्यति चरणवन्दनं कृत्वा । परं सा शपथेन तं दण्डमपि श्रावयति--

स चेद्भवेस्त्वं खलुदीर्घसूत्रो,
दण्डं महान्तं त्वयि पातयेयम् ।
मुहुर्मुहुस्त्वां शयितं कुचाभ्यां
विबोधयेयं च न चालपेयम् ॥
सौ. ४.३५ ।

इत्थं शिष्टाचारानुरोधीनि वाक्यानि अनौचित्यादगर्हितानि भवन्ति कवेः प्रतिभावतोऽपि । अत एव वर्ज्यान्याहुः ।

एवमेव सौन्दरानन्दकाव्ये यथा नन्दस्योद्धारक्रमः प्रदर्शितोऽनेन तथैव केनचिदुपायेन सुन्दरी खल्वपि समुद्धृता स्यात् । प्रियविरहकातराक्षी सा नानाप्रकारैः पीडिता उपवर्णिता, क्वचिदधोमुखी शेते, कदापि गवाक्षतोऽधः पश्यति, क्वापि आगच्छन्तीं दासीं समाकर्ण्य भर्तुरेव पदध्वनिरिति सोपानपद्धति यावद् वेगादागच्छति, एवंविधानि तस्या आचरितानि निर्वर्ण्य कवि मौनमाकलय्य तिष्ठति । नन्दं स्वर्गनगरेऽप्सरोभिः सङ्गं प्रदर्शयति । तत्र तासां विद्युत्पीतावदातां सुन्दरतां निभाल्य नन्दः स्वप्रियां विस्मरति किमिदमेव भारतकवेर्नैपुण्यं न्याय्यं वा ।

यस्य मनो यत्रानुरुद्धं न ततोऽन्यत्र प्रयाति, यदि नन्दस्य मनस्तथाविधं अयोग्यं अपरिपक्वं विश्वासरहितं च, तेन वृथैव वञ्चिता स्वकीया प्राणवल्लभा ! न खलु तस्य कुलानुकूलं वृत्तम् । अथवा सत्यमेव--प्रियाविवञ्चनपटोर्बुद्धस्य भ्रातृत्वेन ।

कुत्रचिज्जम्बूद्वीपे इत्थं कथा श्रूयते यन्नासिकाच्छिन्ने नारायणो दृश्यते । एकं प्रदयसं प्रति नापितेन विरोधः समजनि । अवसरवादी नापितस्तस्य नासाच्छेदमकरोत्, पलायितश्च । लज्जाभयात् तेन स्वनगरं परित्यक्तम् । अगमच्च दूरम् । तत्रापि जनास्तं पीडयन्ति, बालाः सकरतलनादं हासयन्ति । स्वरक्षार्थं वंचनार्थं च तेन प्रयासः कृतः, हसति चेत्ततः जनान् मूढानिति चाधिक्षिपति--घोषयति च नासाच्छिन्ने नारायणो दृश्यते । शनैः शनैः तस्य समाजे बहवः सदस्याः संजाताः । नासाच्छेदानन्तरं कथयति, तव नासाच्छेदः समजनि, न पुनरारोहति, त्वमपि, अस्य धर्मस्य प्रचारं कुरु ।

इत्थमेव प्रमुग्धमते बुद्धस्य अश्वघोषस्य च महिमा, घोषश्च । एते मानवधर्मं, शिष्टाचारं, ऋषिचर्यां, पद्धतिं--वेदान्, शास्त्राणि सर्ववृत्तं च निन्दन्तः सर्वान् मोक्षमार्गभिक्षून् निर्मान्ति । तत्रैवास्य बुद्धस्य जाले नन्दोऽपि निपतितः--

अतो नतं तस्य मुखं सवाष्पं,
प्रवास्यमानेषु शिरो रुहेषु ।
वक्राग्रनालं नलिनं तडागे
वर्षोदकक्लिन्नइवावभासे ।।
सौ. ५.५२ ।

इत्थं वियोजितौ चक्रवाकौ दयापरेण बुद्ध-पक्षिजीवकेन । एकत्र सा बाला क्रन्दति--

ततो हृते भर्तरि गौरवेण
प्रीतौ हृतायामरतौ कृतायाम् ।
तत्रैव हर्म्योपरि वर्तमाना
न सुन्दरी सैव तदा बभासे ।।
६.१ ।

ततश्चिरस्थान परिश्रमेण
स्थितैव पर्यंकतले पपात ।
तिर्यक् च शिश्ये प्रविकीर्णहारा
सपादुकैकार्धविलम्बपादा ।
।६.५

अथ चात्र महर्षिकुलसम्भवस्य नन्दस्य दशां पश्यन्तु---

अद्यावगच्छामि सुदुष्करं ते
चक्रुः करिष्यन्ति च कुर्वते च ।
त्यक्त्वा प्रियामश्रुमुखीं तपो ये
चेरुश्चरिष्यन्ति चरन्ति चैव ।।
७.१३ ।

तथाविधं लोकप्रभाभास्वरं भगवन्तं बुद्धं भ्रातरं सम्प्राप्य नन्दो न ननन्द । अपि तु अप्सरोगणं दृष्ट्वा तत्र निहितादरः सन् ।

ता निःसृताः प्रेक्ष्य वनान्तरेभ्य-
स्तडित्पताका इव तोयदेभ्यः ।
नन्दस्य रागेण तनुर्विवेपे
जले चले चन्द्रमसः प्रभेव ।।
सौ. १०.३६ ।

लघोर्भ्रातुः रागाविष्करणं ज्येष्ठस्य भ्रातुः समक्षे विशेषतोलोकाभिनन्दननन्दितस्य भगवतो बुद्धस्य समक्षे तु नितान्तमनुचितं प्रतिभाति। इत्थं भगवतो बुद्धस्य मतौ विवर्धिषुणा नन्देन अप्सरसः प्रति निष्ठां विधाय तपः क्रियते ! आनन्दः पश्यन् एवं मोहजातं एनमुपहसति--

तिताद्रमिषया दृप्तो यथा मेषोऽपसर्पति ।
तद्वदब्रह्मचर्याय ब्रह्मचर्यमिदं तव ।।
११.२५ ।

यथा पश्यति मध्वेव न प्रयातमवेक्षते ।
पश्यस्यप्सरसस्तद्वद् भ्रंशमन्ते न पश्यसि ।।
११.२६ ।

इत्थमेव स्वशास्त्रगताः साकूताः प्रयोगाः काव्य-क्षेत्रे ललितात्मनि शोभावहाः सन्ति । एतेभ्योऽव-शिष्टेषु स्थलेषु यत्र कविः स्वसहजामन्तःसौन्दर्यसारां परम्परानुवर्तिनीं कल्पनाकल्लोलां वाग्-झरीं प्रवा-हयति, भवति तत्र प्रशंसापात्रम् ।

जन्मसिद्धोऽयं कविर्भावनापरिपुष्टश्च । परं संप्रदायप्रचारेऽस्य बुद्धिः संकीर्णा समजनि । यद्यपि प्रतीयतेऽस्ति शास्त्राणामध्ययनमस्य परं सुगतार्पि-तचित्तत्वात् सर्वत्र दोषदर्शी काव्यमार्गस्य स्वीकृतां पद्धतिं न सम्यगवेक्षते । तथापि काव्येऽस्य निर्वेदस्य परा प्रतिष्ठा निष्ठया दृढीकृता कविना । नाना-प्रकारैस्तत्त्वज्ञानस्य मुहुर्मुहुरावृत्तिर्वर्तते येन मानवः शोककातरं जराव्याधिमरणभयेनाक्रान्तं जगत्समी-क्ष्य दुःखस्य हेतुं निश्चेतुं प्रयतते ।

अयमेव कवेराशयः, कथं मानवानां संसार-दुःखादुद्धारः स्यात् । कविर्वाञ्छति वक्तुं यद् बुद्ध-निर्दिष्ट एव मार्गः साधीयान् सरलश्च । यथाऽऽ-तुरो मृष्टादपथ्याद्विरतः सन् जिजीविषुः कटुकमौ-षधं गृह्णाति स्वस्थश्च भवति, तथेमे संसारस्य भावा आपातमात्रमधुरा अपथ्याश्च । अतः कविः कथयति-

रिरंसा यदि ते तस्मादध्यात्मेधीयतां मनः ।
प्रशान्ता चानवद्या च नास्त्यध्यात्मसमा रतिः ।।
सौ. ११.३४ ।

—०—

# सम्पादकीय टिप्पण्यः

## भारतवर्षस्य प्रच्छन्न शत्रुः

भारतवर्षस्य प्रच्छन्नशत्रुरमेरिकासर्वकार इति भारतीयजनतासु प्रसृतोऽयं चर्चाविषयः। पाकिस्तानाय घातकायुधानामुपायनी कारणेनास्मिन् भारतीयोपमहाद्वीपे युद्धविभीषिका समुत्पन्ना नात्र संशीति लेशोऽपि। यदायदाऽमेरिकादेशेन पाकिस्तानाय भृशं संहारकराण्यस्त्राणि प्रदत्तानि तदा-तदा पाकिस्तानो भारतवर्षमभ्यक्रामत् तदेतत् सर्वं पौनः पुन्येन भारतीयसर्वकारेणामेरिकासर्वकाराय निवेदितं परं यो जानन्नप्यज्ञायते पश्यन्नपि नावपश्यति तत्समक्षं प्रार्थनातर्कचर्चोक्तिप्रत्युक्त्यादिकं सर्वमेतन्निवेदनं निरर्थकमेव। अस्माभिरेतन्नूनं हृदि निधातव्यं यदमेरिका-ब्रिटेनादयो विकसितादेशाः नेहन्ते स्वप्नेऽपि भारतवर्षस्य प्रतिमामुन्नतिं द्रष्टुम्। न च वाञ्छन्त्येते यत्कोऽप्यविकसितो देशस्तदिङ्गितमवहेल्य स्वतन्त्रनीति निर्धारणं स्वच्छन्दविहरणं वा विदध्यात्। अहोऽस्मिन् विषये कूटनीतिरवलम्बनीया। सौभाग्येनास्मिन्नेवावसरे रूसदेशस्य जल-थल-नभसां सर्वोच्चसेनान्योऽपि पारस्परिकविचारविनिमयायोभयत्र हितसाधनाय मन्त्रणायै परिस्थितिसमीक्षायै च भारतवर्षं समागताः। युक्तावसरोऽयं लब्धः प्रधानमन्त्रिपदधिष्ठितया श्रीमत्या इन्दिरादेव्या। अहो! शुभाशंसनीया समये कूटनीतिगर्भिता विचारचातुरी महाभागायाः। मन्ये! नानाविधविपत्तिझंझावातेन सन्दोलिता महोर्मिकल्लोलेऽमेरिकापाकिस्तानादि मकरनक्रसंकुलेऽस्मिन् हिन्दमहासागरे भारततरणिः सुरक्षिता तिष्ठति सन्धृतारित्रे प्रधानमन्त्रिहस्ते।

## शिक्षाक्षेत्रे परिवर्तनम्

भारतवर्षस्य शिक्षा जगति यादृशी दुरवस्थाऽधुना विद्यते न तादृशी पुरा कदाप्यासीत्। छात्रवर्गेषूद्दण्डतोच्छृङ्खलतानुशासनहीनतादयो बहवो दोषाः पराकाष्ठां नीताः। गुरोरवमानना तु प्रत्यहं वृत्तपत्रेषु पठ्यते। पुरा वृत्तपत्रेषु प्रकाशितोऽयं समाचारः सर्वैः पठितो यत् लखनऊ बनारस विश्वविद्यालययो स्तत्रभवन्तमुपकुलपतिं प्रति तत्रत्यैश्छात्रैर्हस्तपादादिप्रणोदन पूर्वकमभद्रो व्यवहारो विहितः। एवमेवाध्यापकवर्गेष्वपि स्वोच्चादर्शानुसारि व्यवहारप्रदर्शनं न भवति। अस्यामवस्थायाँ सर्वे भणन्ति यत् शिक्षायाँ परिवर्तनं विधातव्यं परं न कोऽपि साहसं विदधाति।

अस्मन्मते सर्वप्रथममुपाधीनां महत्त्वं समापनीयम् नियुक्तिषु न ते गणनीयाः। यतो हि तेऽनुचितोपायैः सम्प्राप्यन्ते। मैट्रिकपरीक्षापर्यन्तमेव शिक्षाया अनिवार्यता स्थापनीया। तदनन्तरं सर्वकारीयोद्योगाद्यधीनं यथावश्यकं शिक्षणं प्रचालनीयम् तत्र नियुक्तेरवश्यंभाविता स्यात् तत्रापि नियमपरायणानाँ सदाचारप्रवणानां छात्राणामुच्चस्थानं भवेत्। अन्यच्च ये कलासम्बन्धिविषयाः स्युस्तेषामध्ययनाध्यापनाय प्रौढपाण्डित्यसम्पन्नाः ससम्मानं विद्वांसो नियोक्तव्याः। तेषां स्थिरावृत्तिर्विधातव्या। तेषां समीपे विद्यार्थिनः सन्तु न वा सन्तु वृत्तेर्व्याघातो यावज्जीवं न जायेत। तेषां गृहमेव शिक्षाणालय इति मन्तव्यम्। अस्मिन् विषये पुराकाल इव विविधा वैयक्तिकसंस्थाः धनिनो वा प्रोत्साहनीयाः।

## साहित्य समोक्षा

'कवि श्री जॉनडन' अनुवादक डा० रामसेवकसिंह, रीडर अंग्रेजी विभाग, कुरुक्षेत्र विश्वविद्यालय, कुरुक्षेत्र

प्रकाशक : सेतु प्रकाशन झांसी, १९७४; पृष्ठ १४२

मूल्य—८-०० रु० मात्र ।

अंग्रेजी कवि ड्राइडेन ने एक बार कहा था कि डन अपनी कविताओं में दर्शन का पुट अधिक देता है। उसी सूत्र को पकड़ कर डा० जानसन ने डन तथा उन के अनुयायियों को 'मेटाफिजिकल' विशेषण से विभूषित किया। यह विशेषण ऐसा सक्षम है कि डन के काव्य की तमाम विशेषतायें इसमें समाहित हैं। डन का काव्य अपनी विविधता तथा गूढ़ता के लिए प्रसिद्ध है। चूंकि आधुनिक युग या सभ्यता, टी० यस० इलियट के मतानुसार विविधता तथा गूढ़ता को भली-भांति समझता है, अतः डन वर्तमान युग या सभ्यता के काफी सन्निकट हैं। ऐसा ही मत प्रसिद्ध आलोचक जेम्स रीव्ज ने भी व्यक्त किया है। वस्तुतः आज अंग्रेजी कविता में डन परम्परा के प्रति प्रगाढ़ प्रेम है तथा उसे पुनर्जीवित रखने के प्रति विशेष जागरूकता है। ऐसे उपयुक्त वतावरण में यह सर्वथा उचित ही है कि कवि डन की विभिन्न पहलुओं से व्याख्या की जाय तथा उनके काव्यगत सन्देश को अनेकानेक भाषाओं में अनूदित किया जाय। डा० रामसेवकसिंह द्वारा लिखित "कवि श्री जानडन" इस दिशा में किया गया एक प्रयास है।

उक्त पुस्तक में अनुवादकीय, प्राक्कथन, जानडन : एक परिचय, संचित कविताओं का अनुवाद एवं अनुक्रमणिका पाये जाते हैं। इसके अतिरिक्त अनुवादक की टिप्पणियां यत्र-तत्र सर्वत्र विद्यमान हैं जो कि अधिकांशतः ज्ञानवर्द्धक तथा कविताओं के समझने में सहायक हैं।

अपने संक्षिप्त 'अनुवादकीय' में अनुवादक ने अनुवादक के मार्ग में आने वाले कुछ व्यवधानों का संकेत किया है तथा बताया है कि कवि श्री जानडन शायद प्रथम बार ही हिन्दी में अनूदित हो रहा है।

चार पृष्ठों का "प्राक्कथन" डा० बी० के० कालिया, अध्यक्ष अंग्रेजी विभाग कुरुक्षेत्र विश्वविद्यालय, कुरुक्षेत्र, द्वारा विवेचनात्मक ढंग से लिखा गया है। इसमें आशा व्यक्त की गई है कि डा० सिंह का सुन्दर अनुवाद हिन्दी पाठकों को अपनी ओर आकर्षित करेगा तथा हिन्दी कवियों को सोचने की एक नवीन दिशा देगा।

डा० सिंह का "जान डन : एक परिचय" विस्तृत रूप से चौवालिस पृष्ठों में प्रस्तुत किया गया है। इसमें कवि डन की जन्म से मृत्यु पर्यन्त जीवनी दी गयी है तथा उसके काव्य के क्रमिक विकास की एक झांकी दिखलाई गई है।

अपने अनुवाद के हेतु डा० सिंह ने सांग्स एण्ड सानेट्स, सूक्तियों, शोक-गीतों, व्यंग्य-काव्यों, दूसरी बरसी और धार्मिक कविताओं का चयन किया है।

यह सर्वमान्य तथ्य है कि 'सांग्स एण्ड सानेट्स' जांनडन की सर्वोतम कृति है। निसन्देह डा० सिंह ने कविताओं के चयन में एक सूझ-बूझ का परिचय दिया है। उनका शब्दों व मुहावरों, लयों व छन्दों का चयन भी प्रशंसनीय है। इससे सहज अनुमान

लगाया जा सकता है कि डा० सिंह को कितना परिश्रम करना पड़ा होगा। उनके अनुवाद को पढ़कर लगता है कि उन्होंने मौलिक कविताओं की आत्मा तक पहुंचने का सफल प्रयास किया है। यह बात नहीं है कि उनके द्वारा अनूदित सारी कविताएं समान रूप से मनोरम व दोषमुक्त हैं, तथापि उन में से अनेक–प्रथम 'गीत', 'अवशेष' 'ट्विकनम गार्डेन', 'विदाई : पुस्तक की', 'स्वप्न', 'आनन्द तिरेक', 'औरत की वफादारी', 'सन्त-घोषणा', 'कामदेव', 'उदासीनता', 'तेहरी मूर्खता' आदि - वस्तुतः डा० सिंह के स्तुत्य प्रयास के प्रमाण हैं। इन कविताओं में अनुवाद की कोई न कोई विशेषता अवश्य ही परिलक्षित होती है।

संकलित सूक्तियों में 'हीरो एण्ड लिअांडर', 'आत्मघियोक्ता', 'फ्रायनी', और 'क्लोकियस' आदि का अनुवाद छन्दोबद्ध होने के कारण जानदार व आह्लादकर है।

अपने जीवन में जॉनडन ने कुल बीस शोक-गीतों को लिखा, जिनमें से पांच प्रस्तुत पुस्तक में अनूदित हैं। इन पांच में से, 'ईर्ष्या' तथा 'अपनी प्रेमिका से' विशेष रूप से उल्लेखनीय हैं।

१५९३-९४ ई० में डन ने पांच व्यंग्य-काव्यों का सृजन किया। इन में से दो यहां पर अनूदित हुए हैं। इन दो में से एक दरबारियों की चापलूसी का पर्दाफाश करता है तो दूसरा व्यर्थ में पनपने वाले धार्मिक वाद-विवाद का।

'दूसरी बरसी' का डन की कविताओं में एक विशिष्ट स्थान है। यह लम्बी कविता १६१२ ई० में एलजवेथ ड्रूरी, एक पन्द्रह वर्षीय बालिका, के निधन पर लिखी गई थी। नौ भागों में विभक्त इस कविता के अनूदन में डा० सिंह को कठिनाइयों व कष्टों के बीच से गुजरना पड़ा होगा।

अपने काव्य जीवन के अन्तिम चरण में जानडन ने कुल पैंतीस धार्मिक कवितायें लिखी, जिन में से सात इस पुस्तक में अनूदित हैं। इनमें से चार मृत्यु विषयक हैं तथा अन्य तीन ईश-भक्ति प्रधान।

तत्पश्चात् दो पृष्ठों की अनुक्रमणिका दी गई है, जिसमें सभी अनूदित कविताओं का उल्लेख है। ऐसा प्रतीत होता है कि यह कार्य शीघ्रता से किया गया, क्योंकि इसमें 'अवसान' नामक कविता का उल्लेख नहीं है।

स्पष्टतः इस पुस्तक में मुद्रण व संशोधन सम्बन्धी कुछ अशुद्धियाँ हैं। आशा है, इन्हें दूसरे संस्करण में दूर कर दिया जायेगा।

अन्त में, डा० सिंह का उत्तम अनुवाद हिन्दी पाठकों को अपनी ओर अवश्य ही आकर्षित करेगा तथा कवियों को, जैसा कि 'प्राक्कथन' में कहा गया है, नव गति, नव लय एवं नव रस प्रदान कर एक नई परम्परा स्थापित करेगा।

डा० प्रसन्नाथ द्विवेदी,
प्रवक्ता–अंग्रेजी विभाग,
गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार

## ऋग्वेद भाष्यम्

( मण्डल १, सूक्त-५१-१०५ पर्यन्तम् )
भगवत्पाद दयानन्द सरस्वती विरचितम्
तस्यायं तृतीयोभागः

सम्पादकः—श्री युधिष्ठिरो मीमांसकः

प्रकाशकः—श्री चौधरी प्रतापसिह, प्रधान रा.ब. चौ० नारायणसिंह, प्रतापसिंह धर्मार्थ ट्रस्ट। ५७ एल० माडल टाउन, करनाल (हरयाणा)

प्राप्ति स्थानम्—रामलाल कपूर ट्रस्ट, बहालगढ़ सोनीपत (हरयाणा) मूल्यम्—३०-००

महता प्रयासेन संशोध्य नैकविधटिप्पणी परिशिष्टादिसंवलितोऽयं तृतीयोभागः प्रौढपाण्डित्यसमलङ्कृतैः श्री मीमांसकमहोदयैः प्राकाश्यं नीतः। आदावत्रभाष्ये ऋग्वेदस्य प्रथममण्डलस्य पंचाधिकशततमसूक्तस्य (१-१०५) विषये 'विशेषविचार' इतिकृत्वा त्रित्व-द्वित-एकत इत्याख्यानवलम्ब्य वेदेष्वनित्यैतिह्यखण्डनपरा वेदविद्याजुषां विचारोद्बोधिका संस्कृतार्यभाषाद्वयोपेता भूमिका प्रदत्ता। तदनन्तरं तृतीयभागस्य विस्तृता विषयसूची तत्पश्चात् भाष्यम्, अन्तेच अष्टसंख्यकानि परिशिष्टानि च प्रदत्तानि। तथा—१ परिवर्तनं परिवर्धनं संशोधनम् २ भाष्यउद्धृतानां प्रमाणानां सूची, ३ टिप्पण्यामुद्धृतानां प्रमाणानां सूची, ४ भाष्यउद्धृतानां ग्रन्थानां सूची, ५ टिप्पण्यामुद्धृतानां ग्रन्थानां सूची, ६ भाष्ये स्मृतानां व्यक्तीनां सूची, ७ टिप्पण्यां स्मृतानां व्यक्तीनां सूची, ८ अस्मिन् तृतीय खंडे व्याख्यातानां मन्त्राणां सूची, एवमष्टविध सूची समलंकृतोऽयं भागः सर्वाङ्गपरिपूर्णः समजनि। अध्येतृभ्योऽतीव साहाय्यकर समपद्यत।

## महाभाष्यम्

पतञ्जलिमुनिविरचितम्
( तृतीयोभागः—द्वितीयोध्यायः )

व्याख्याकारः—श्री पं० युधिष्ठिरो मीमांसकः

प्रकाशकः—श्री प्यारेलाल द्राक्षादेवी न्यास (ट्रस्ट) सी० ४, सी०सी० कालौनी, दिल्ली

मूल्य—२०-००

पतञ्जलिमुनिविरचितस्य हिन्दीव्याख्या समन्वितस्य महाभाष्यस्यायं तृतीयो भागः प्राकाश्यं नीतः। अत्राष्टाध्याय्या द्वितीयोध्यायः पूर्णतां गतः।

व्याकरणशास्त्रपारंगतै हिन्दी व्याख्याकारैः श्री मीमांसक महोदयै र्भाष्यगतग्रन्थीनां यादृक्समाधानं सूत्राणां च स्पष्टीकरणमलङ्कृतं न तदन्यत्राऽस्माकं दृष्टिपथं यातम्। 'विशेष' इति कृत्वा टिप्पण्यां व्याख्यानस्य यत् पुनः स्पष्टीकरणं कृतं तत् संस्कृतप्रेमिणां बालानामपि सुखबोधायातीव महत्त्वशालि संजातम्। अतः सर्वैः संस्कृत प्रेमिभिरवश्यं भाष्यमिदं पठनीयम्।

धन्योऽयं मीमांसक महाभागश्चिरायुर्भवेत्।

# विश्व-हिन्दी-सम्मेलन के कुछ संस्मरण

(डा० अम्बिकाप्रसाद वाजपेयी एम०ए०, पी-एच०डी, डीलिट०–हिन्दी विभागाध्यक्ष,
गुरुकुल कांगड़ी विश्वविद्यालय)

विश्व-हिन्दी-सम्मेलन नागपुर में सम्पन्न हुआ और १० जनवरी से १४ जनवरी तक इसके अन्तर्गत विविध कार्यक्रम चलते रहे। इस सम्मेलन की ओर से कई पत्र मुझे तथा माननीय कुलपति महोदय को प्राप्त हुए। माननीय कुलपति महोदय का आदेश हुआ कि मैं इस सम्मेलन में विश्वविद्यालय की ओर से प्रतिनिधि के रूप में भाग लूं। तदनुसार मैं इस सम्मेलन में भाग लेने के लिए नागपुर गया।

मेरा अनुमान था कि इस सम्मेलन की व्यवस्था उसी ढंग से होगी जैसी कि अन्य हिन्दी-सम्मेलनों की हुआ करती है, परन्तु नागपुर पहुंचने पर मुझे उनकी व्यवस्था देखकर बड़ा आश्चर्य हुआ। नागपुर रेलवे स्टेशन पर उनका बड़ा पण्डाल था, जहाँ से विश्व-हिन्दी सम्मेलन की बसें आगन्तुकों को यथोचित स्थान पर पहुंचाने के लिए तैयार खड़ी रहती थीं। वहां पर स्वयंसेवकों की पर्याप्त संख्या तथा उनके विनम्र व्यवहार को देखकर एक आगन्तुक को कितनी शान्ति और कितना सन्तोष मिलता होगा इसकी कल्पना सहज ही में की जा सकती है। स्वयंसेवकों के रूप में कार्य करने वाले सभी व्यक्ति प्रायः उच्च शिक्षा प्राप्त अध्यापक, प्राध्यापक, विश्वविद्यालयों के छात्र, वकील, डाक्टर, व्यवसायी तथा अन्य सभी उच्चवर्गों के लोग थे। महिला स्वयंसेविकाओं की संख्या भी पर्याप्त थी। ऐसा प्रतीत होता था मानो सारा नगर ही इस सम्मेलन में आने वाले विद्वानों की अगवानी के लिए उपस्थित हो। ऐसा भावपूर्ण स्वागत मैंने पहली बार ही देखा, अतः इसे देखकर मुझे बड़ी प्रसन्नता हुई। इस सम्मेलन की व्यवस्था के लिए इसके संयोजक श्रीमान् अनन्त गोपाल शेवडे जी की जितनी प्रशंसा की जाए वह कम है।

मेरा अनुमान था कि इतने बड़े सम्मेलन में आवास की व्यवस्था सन्तोषजनक न होगी, परन्तु उन्होंने मुझे अपने सर्वोत्तम निवास **आमदार निवास** (न्यू एम० एल० ए० होस्टल) में ठहराया, जिसमें सभी आधुनिक साधन विद्यमान थे और लिफ्ट से चढ़ने उतरने की व्यवस्था भी थी। सबसे बड़ी विशेषता यह थी कि घण्टी का स्विच दबाते ही तुरन्त कोई न कोई भृत्य उपस्थित हो जाता था। यहां अतिथियों का स्वागत करने की हार्दिक भावना का मुझे सुखद अनुभव हुआ। प्रायः सभी अतिथियों का यही कथन था कि हिन्दी के विद्वानों का इतना सुन्दर स्वागत पहली बार ही देखने को मिला है। जलपान और भोजन की समुचित व्यवस्था एवं व्यक्तिगत रूप से अतिथियों की देखरेख का उदाहरण भी अन्यत्र मिल सकना कठिन है।

प्रथम दिवस का कार्यक्रम उद्घाटन का था, इसमें मारिशस के प्रधानमन्त्री तथा श्रीमती इन्दिरा गांधी के व्याख्यान हुए। दोनों ने इस सम्मेलन को अपनी सद्भावनाएं अर्पित कीं तथा काका कालेलकर ने आधुनिक परम्पराओं को तोड़ते हुए (अपने मुद्रित भाषण को न पढ़कर) भाव-विभोरता में मस्त होकर अपनी मौलिक शैली में व्याख्यान दिया। इस प्रकार सम्मेलन में नवीनता और प्राचीनता दोनों का ही समन्वय हो गया।

उसी दिन दिल्ली के कुछ छात्रों ने सम्मेलन के विरुद्ध प्रचार करने वाले पर्चे भी बांटे, जिनमें इस सम्मेलन को राजनीति से प्रेरित कहा गया था। इसका अधिक प्रभाव नहीं हुआ और न सम्मेलन के कार्यक्रमों में कोई बाधा ही उत्पन्न हुई।

दूसरे दिन से विचार गोष्ठियों तथा सांस्कृतिक कार्यक्रमों का शुभारम्भ हुआ। विचार गोष्ठियों में विदेशी अतिथियों को ही मुख्य रूप से बोलने का अवसर दिया गया। कदाचित् ऐसा इस लिए हुआ होगा कि विदेशी विद्वान अपने आपको गौरवान्वित अनुभव करें तथा इस देश की जनता को यह ज्ञात हो सके कि हिन्दी को विदेशों में कितना सम्मान मिल रहा है। हिन्दी को राष्ट्रसंघ की भाषा बनाने के लिए एक सुन्दर भूमिका भी तैयार की गई और उसे व्यापक समर्थन प्राप्त हुआ। मारिशस के युवा क्रीड़ा मंत्री का भाषण अत्यन्त प्रभावशाली रहा तथा विश्व हिन्दी सम्मेलन को स्थायी संस्था बनाने की मांग भी उनके द्वारा की गई। गोष्ठी की अध्यक्षता करते हुए भारत के विदेश मंत्री श्री चह्वाण ने भी हिन्दी के पक्ष में भाषण दिया।

इसके पश्चात् युवा पीढ़ी विषयक गोष्ठी हुई, जिसकी अध्यक्षता फिजी के संसद सदस्य श्री विवेकानन्द शर्मा, श्री अमृतराय तथा श्री राजेन्द्र यादव ने की। इसके संयोजक श्रीकमलेश्वर तथा विषयप्रतिपादक श्री धर्मवीर भारती थे। फिजी के संसद सदस्य ने हिन्दी को विश्व के विराट परिवार में प्रतिष्ठित करने पर बल दिया और भाषा की सहजबोधगम्यता पर बल दिया। इसी गोष्ठी में कुछ वक्ताओं ने विरोधी स्वर मुखरित किया। इन्होंने सभाकक्ष से बाहर समानान्तर गोष्ठी का आयोजन भी किया, जिसमें पर्याप्त वाद-विवाद उत्पन्न हुआ।

इसी दिन एक विचार गोष्ठी में डा० शिवमंगलसिंह 'सुमन' (कुलपति, विक्रम विश्वविद्यालय) का ओजस्वी भाषण हुआ जिसमें उन्होंने यह बतलाया कि विश्व को भारत की देन वस्तुतः हिन्दी की ही देन है। सभी वक्ताओं का यह मत था कि 'विश्व मानव' की भावना के प्रचार के लिए हिन्दी को अन्तरराष्ट्रीय क्षेत्र में प्रतिष्ठापित किया जाना चाहिए।

अगले दिन की गोष्ठी की अध्यक्षता भारत के उपराष्ट्रपति श्री जत्ती ने की थी। उन्होंने कहा कि अन्य सभी को एक मंच पर लाने का श्रेय हिन्दी की गुरुत्वाकर्षण शक्ति को है।

इसी गोष्ठी में भाषण देते हुए सिन्धी के साहित्यकार प्रो० राम पंजवानी ने कहा कि मैं सिन्धी से हिन्दी हो गया हूं। श्री भारत प्रकाश भाटिया ने ११० शब्द प्रति मिनट की गति से हिन्दी टाइपिंग का प्रदर्शन भी किया जिसे देखकर लोगों को आश्चर्य हुआ। उनका यह कार्यक्रम **'हिन्दी एक झांकी'** प्रदर्शन में हुआ।

'ज्ञान विज्ञान' गोष्ठी में तैलगू के कतिपय विद्वानों ने हिन्दी भाषा को अपनाने पर बल दिया। उनका कथन था कि हिंदी को एकमात्र विश्वविद्यालय-शिक्षा का माध्यम बनाना चाहिए। भारतीय भाषाओं के कतिपय लेखकों का सम्मान भी किया गया। इसी बीच विश्व हिन्दी प्राध्यापक परिषद् के गठन की घोषणा की गई तथा एक तदर्थ समिति बनाई गई। इतना ही नहीं कथित समानान्तर हिन्दी सम्मेलन का षड्यन्त्र भी रचा गया।

उक्त विरोधाभासों के होते हुए भी सम्मेलन का कार्य अबाधगति से चलता रहा। अन्त में सम्मेलन में आए हुए कतिपय विद्वानों के लिखित सुझाव साइक्लोस्टाइल कराकर देश-विदेश के प्रतिनिधियों में विचारार्थ वितरित किए गए। इन समस्त चौदह लेखों में से एक लेख इस लेखक का भी है। सम्मेलन की योजना यह है कि उन्हें मुद्रित कराकर सभी सदस्यों के पास प्रेषित किया जायगा।

१४ जनवरी को पवनार, वर्धा तथा सेवाग्राम दर्शन की योजना का कार्यक्रम भी पूर्ण हुआ। वर्धा में गोस्वामी तुलसीदास की प्रतिमा स्थापित की गई तथा विश्व हिन्दी विद्यापीठ का शिलान्यास भी हुआ।

उक्त कार्यक्रमों को देखकर मैं यह कह सकता हूं कि 'विश्व हिन्दी-सम्मेलन' ने हिन्दी को एक ऐसा मंच प्रदान किया है, जिसमें प्रथम बार देशी तथा विदेशी विद्वानों को सम्मानित किया गया है। हिन्दी का भविष्य देशवासियों के हाथ में है। सम्मेलन ने इसके लिए उपयुक्त पृष्ठभूमि तैयार कर दी है।

—★—

## गुरुकुलपत्रिकाविवरणम्

| | | | |
|---|---|---|---|
| १. | प्रकाशनस्थानम् | : | कांगड़ी गुरुकुलम् |
| २. | प्रकाशनं कदा भवति | : | मासिकी पत्रिका |
| ३. | स्वामिनी समितिः | : | गुरुकुल कांगड़ी विश्वविद्यालयस्य विद्या-सभा |
| ४. | सम्पादकस्य नामधेयम् | : | श्री भगवद्दत्तो वेदालंकारः |
| | राष्ट्रियता | : | भारतीयः |
| | संकेतः | : | कांगड़ी गुरुकुलम् |
| ५. | प्रकाशकस्य नामधेयम् | : | डा० गंगाराम गर्गः |
| | राष्ट्रियता | : | भारतीयः |
| ६. | मुद्रकस्य नामधेयम् | : | श्री सुरेशचन्द्र वैष्णवः |
| | राष्ट्रियता | : | भारतीयः |

अहं गंगारामगर्गो घोषयामि यदुपरलिखितं विवरणं मदीयज्ञानविश्वासानुसारं यथार्थं वर्तते।

ह० गंगाराम गर्गः
गुरुकुलपत्रिका-प्रकाशकः

